HPMUL/2017/74934

ISSN 2581-6446

# पदगङ्गा

## (PADA GANGA)

Peer Reviewed Annual Research Journal of Vyakarana

Vol. 05

2021







**VEDAVYAS CAMPUS**
Central Sanskrit University, Balahar
Himachal Pradesh-177108
www.rsksbalahar.ac.in

ISSN : 2581-6446

| | | |
|---|---|---|
| Title | : | Pada Ganga ( पदगङ्गा ) |
| Vol. : | : | 05 |
| Year | : | 2021 |
| Price | : | 60/- |



| | | |
|---|---|---|
| Copy | : | 100 |
| **Edited, Printed & Published by** | : | Prof. L.N. Pandey, Director<br>Central Sanskrit University, Vedavyas Campus,<br>Balahar, Himachal Pradesh-177108 |
| **Email** | | pub.vvc@gmail.com |
| **Website** | | http://www.rsksbalahar.ac.in |
| **Fax/Phone** | | 01970-245409 |
| **Printed at** | : | Abhi Books & Printers,<br>F-19A, Focal Point Ext. Jalandhar-144103.<br>09465238137 (M) |
| **Composed and Designed By** | : | Ajay Sharma for Abhi Books & Printers. |

**सूचना:**-प्रकाशित लेखों व शोधपत्रों से प्रकाशक का सहमत होना अनिवार्य नहीं है।

# FROM EDITORS' DESK.........

One of the purpose of research is to make something simpler and up-to-date. This quest to redefine a known fact or known technology or known method is running high now a days and it is behind the massive progress of present day science. Now science made the life simpler and sophisticated. But it's not the case with Vedic Limbs. They almost lost their links to daily human life and are considered as occasional subjects which are seldom used for daily routine. This perception grows day by day. It becomes stronger day by day. At the end it is expected to lose its ground.

Unless a thought process has been started at the earliest it will become a piece of historic information. So it's the right time to change the perception and conceptualize the real need of linking the same to present day human life as its counterparts in west do and succeed. A large number of community in India earns bread from unorganized sectors. One of such sectors is the traditional ceremonies which are collectively and commonly termed as Karmakand. The basic tool of this sector is the sound released from Mantras, which are set of sounds clearly proposed, controlled and monitored by the Vedic wisdom. That Vedic sound or Nada or whatever one wish to say, is considered eternal. It is the internal part of Akasha and the same Akasha in known as the source of universal creation.

Vykarana, the Shabda Shastra, particularly exists to protect and explain that eternal sound. The great Panini wrote his Vyakarana principles with the help of the sounds he got from the Damaru of lord Shiva. This simple truth shows the power of Sound. Now the need of the hour is to go through that knowledge discover the reality of the Sound. It is very clear that the consequences of such research will prove the sound and its related Vedic sciences as science or beyond science. It will also help to combatthe so many unsolved natural problems which are out of control at present. The present day science succeeds in explaining the problems but it has no solutions.

Any such solid research can prove the real sense of the most commonly used verse which defines the Veda. The verse is प्रत्यक्षेनानुमित्या वा यस्तूपायो न विन्दते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता।

# विषयसूची

ISSN : 2581-6446

# स्फोटध्वनिस्वरूपम्

प्रो. भारतभूषणत्रिपाठी

अर्थनिरूपितशक्त्याश्रय: क: वर्तते अर्थात् रामत्वविशिष्टराम-पदार्थनिरूपितशक्त्याश्रय: क:, यद्युच्यते राम इत्यत्र रकार-अकार-मकार अकार-रूपवर्णानां समुदाय: शक्त्याश्रयो वर्तते तदा शब्दशास्त्रे वर्णानाम् उच्चरितप्रध्वंसित्वात् समुदाय: नैव लभते। शब्दशास्त्रे वर्ण: एकस्मिन् क्षणे उत्पद्यते द्वितीयक्षणे विनष्टो भवति येन प्रयत्नेन वर्ण: उच्चरित: तेनैव प्रयत्नेन स वर्ण: नष्टो भवति। तत्पश्चात् अन्येन प्रयत्नेन द्वितीयो वर्णोच्चरितो भवति अयं क्रम: प्रचलति। क्रमेस्मिन् वर्णानां समुदाय: नैव सम्भवति। समुदायाभावे 'राम' इति समुदायाभावात् तदर्थनिरूपितशक्ति: क्व तिष्ठेत् चेदुच्यते रवर्णे शक्ति: तिष्ठेत् तर्हि अन्यवर्णोच्चारणप्रसघौभघौपत्ति:।

वैयाकरणससिद्धान्तलघुममजूषायां लिखितं वर्तते- ''यावाकारे वाग् वर्तते न तावदौकारे इति येनैव यत्रैनैको वर्ण उच्चार्यते तेनैव विच्छिपे तस्मिन्वर्णे उपसंहृत्य तं यत्नमन्यं यत्नमुपादाय द्वितीय: प्रवर्तते''।

अत्र शघड्डते प्रथमक्षणे उत्पप: वर्ण: द्वितीयक्षणे विनष्टो भवति विनष्टे तस्य संस्कार: तिष्ठेत् एवं द्वितीयवर्णस्योच्चरिते विनष्टे तस्यापि संस्कार: तिष्ठेत् एवं रीत्या अव्यवहितोत्तरत्वसम्बन्धेन प्रथवर्णस्य सम्बन्धी द्वितीयवर्ण: द्वितीयवर्णस्य पूर्ववर्णविशिष्ट अव्यवहित्तोरत्व-सम्बन्धेन तृतीयवर्ण: सम्बन्धी भविष्यति एवं रीत्या समुदाय: प्राप्स्यते अथवा वीचितरघौन्यायेन एक: वर्ण: विनष्ट: सन् तत्सजातीय द्वितीयं वर्णमुत्पादयति द्वितीय: वर्ण: स्वसजातीयं तृतीयं वर्णमुत्पादयिष्यति एवं क्रम: राम इत्यत्र अन्तिम अकारपर्यन्तं प्रचलिष्यति तर्हि अनेन क्रमेणापि राम समुदायं प्राप्तुं शक्यते। परमच एवं उभयो: क्रमयो: प्रथमे क्रमे वर्णस्य उत्पपे विनष्टे सति अयं पूर्व: अयं पर इति व्यवहारो नैव भवितुं शक्यते। संस्कारेणोत्पद्यमानस्य समूहालम्बनज्ञाने अयं घट: इति शब्द: इति इदं पदनिर्दिष्टव्यवहारोऽपि नैव कर्तुं शक्यते वर्णानामविद्यमानत्वात्। द्वितीयक्रमे शब्दजशब्दे वर्णसमुदायरूपसत्ताया: अभावात् घटशब्दसत्तया: ज्ञानं अप्रमात्मकं भविष्यति। अथ च संस्कारवशात् ज्ञायमानसमुदाये क्रमो न भवति तस्मात् नदी इत्यस्य स्थाने दीन इत्यस्यापि बोधापत्तिर्भविष्यति तस्मात् वर्णानां समुदायाभावात् शक्ति: क्व तिष्ठेत् इति प्रश्न: पूववदेव। तत्र वैयाकरणै: समाधीयते यत् अर्थनिरूपितशक्त्याश्रय: स्फोटात्मक: शब्द: वर्तते स च स्फोटात्मक: शब्द: नित्य: ध्वनिना अभिव्यंग्य: सन् रामार्थनिरूपित शक्त्याश्रय: समुदायरूप: रामरूपार्थबोधकश्च वर्तते।

व्याकरणदर्शने शब्दपदेन स्फोट: गृह्यते तत्र महाभाष्यकारेण तपरस्तत्कालस्य (१.१.७) सूत्रे व्यलेखि ''स्फोट: शब्द: ध्वनि: शब्दगुण: अत्र गुणशब्द: व्यमजकार्थक: अर्थात् ध्वनि: स्फोटरूपशब्दस्य व्यञ्जक: इति। स्फोटशब्द: स्फुट् विकसने इत्यस्मात् धातो: करणे घञ् प्रत्यये कृते निष्पद्यते तस्य व्युत्पत्ति: क्रियते स्फुटति=प्रकाशते अर्थोऽनेनेति अस्य शाब्दबोधो भवति अर्थविषयकप्रकाशकरणम्। स्फुटति-अर्थोऽस्मादित्यपि व्युत्पत्ति: क्रियते परम्परात् तस्यापि शाब्दबाधो भवति अर्थप्रमितिप्रयोजकत्वम् अनया व्युत्पत्या अर्थबोधजनकता शब्दनिष्ठा। स्फुट् धातो: कर्मण्यपि घञ् क्रियते स्फुट्यते=अभिव्यज्यते प्रकाश्यते वर्णादिभि: इति स्फोट:। अकर्तरि च कारके संज्ञायाम् इति सूत्रेण घञ् स्फुटति अस्मात् अथवा, करणव्युत्पत्या, स्फोटशब्दे वाचकता सम्भवति, कर्म व्युत्पत्या स्फोटशब्दे व्यघौयत्वम् समायाति ध्वनिनिष्ठव्यमजकतानिरूपितव्य-घौयत्वम् आहोस्वित् अर्थनिष्ठबोधाजनकतावान् शब्द:। वैयाकरण-भूषणसारस्य प्रभाटीकायां तस्यार्थ: कृत: तत्तदर्थनिष्ठविषयतानिरूपक-शक्तिमत्वं स्फोटत्वम्। अयं स्फोटशब्द: क: ध्वनिशब्द: क: इति विषये महाभाष्यकारेण वाक्यपदीयकारेण नागेशभट्टेन च बहु व्यलेखि स एव विचार: यथाक्रमं प्रदर्श्यते।

**महाभाष्यकारदृष्ट्या स्फोटध्वनिविचार:-**

महाभाष्यकारेण अथ शब्दानुशासनम् इति शब्दशास्त्रस्य प्रयोजनमुक्तम्। ''अथशब्दानुशासम्'' (म-भा-प-) इत्यत्र अनुशासनक्रिया निरूपितकर्मत्वेन प्रतिपादितस्य शब्दस्य किं स्वरूपम्। अथवा घटितज्ञाने घटकज्ञानं कारणम् इति धिया शब्दानुशासनघटितज्ञाने घटकतया प्रविष्टस्य शब्दस्य किं स्वरूपम् इति जिज्ञायायां ज्ञानम् अपेक्षितम्।

शब्दस्वरूपनिर्णये भगवता पतञ्जलिना अथ शब्द: क: इति प्रश्नमुद्भाव्य गौरित्यत्र क: शब्द: इति प्रश्नमुद्भावयति तत्र तु प्रश्न: स्यात् क: शब्द: इति प्रष्टव्ये गौरित्यत्र क: शब्द: इति विशेषविषयकप्रश्न: क्रियते तत्रास्ति नियम: निर्विशेषं न सामान्यम् अत एव गौरित्यत्र क: शब्द: इति प्रश्न: कृत:। महाभाष्यकारेण क: शब्द: इति जिज्ञासायाम् शब्दस्य स्वरूपद्वयं व्याख्यायि स्फोटात्मक: शब्द: ध्वन्यात्मकश्च तत्र स्फोटात्मकशब्दस्य परिभाषा कृता येनोच्चारितेन सास्नालागूलककुदखुरविषाणिनां सम्प्रत्ययो भवति स: द्वितीया परिभाषा अथवा प्रतीतपदार्थको लोके ध्वनिशब्द: (म-भा-प-)। शब्दस्य यल्लक्षणं भगवता कृतं तल्लक्षणविषये किञ्चत् व्याख्येयम् वर्तते, तत्र प्रथमं लक्षणं परिष्क्रियते। येन इत्यत्र करणे तृतीया उच्चारितेन इत्यस्यार्थ: क्रियते प्रकाशितेन येन उच्चारितेन प्रकाशितेन सास्नालागूलादिपदार्थानां बोधो भवति स शब्द: अनया परिभाषया स्फोटात्मकशब्दस्य व्यग्या सिद्धति, ध्वनौ च व्यञ्जकता तस्मात् स्फोटध्वन्यो: व्यग्यड्डव्यञ्जकभावसम्बन्ध: कल्प्यते। व्यञ्जक: ध्वनिर्वर्तते। प्रकाशित: व्यस्फोट: वर्तते स एव अर्थस्य बोधक: अर्थस्य बोधकत्वात् स्फोटे वाचकता अर्थे वाच्यता भवति।

इदानीं शब्दस्य यद् द्वितीयलक्षणं वर्तते तत्र किमचत् प्रतिपाद्यते। अव्याप्ति-अतिव्याप्ति-असम्भवदोषरहितम् लक्षणम् स्यात्। द्वितीयलक्षणे यदि केवलं ध्वनि: शब्द: इत्येव स्यात् तदा काकादीनामपि ये शब्दास्तेषामपि ध्वनित्वेन शब्दत्वात् तेषामपि अनुशासनम् प्रसज्येत।

यतो हि उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासतेऽसति बाधके। प्रकृतौ अथ शब्दानुशासनम् इत्यत्र उद्देश्यं वर्तते शब्द: उद्देश्यता शब्दे उद्देश्यतावच्छेदकं शब्दत्वं तथैव विधेय: अनुशानम् अस्ति तर्हि अनुशासने उद्देश्यतावच्छेदकं यत् शब्दत्वं तस्य व्यापकत्वं स्यात् अर्थात् यत्र यत्र शब्दत्वं तत्र तत्र अनुशासनत्वं स्यात् तस्मात् काकादि ध्वनावपि शब्दत्वं वर्तते तस्मात् तत्रपि अनुशासनत्वं भवेत। यथा- इको यणचि इति सूत्रं सवर्णाज्भिन्नाच्पदबोध्यवर्णाव्यवहितपूर्वत्वविशिष्टनामिक्पदबोध्यानां वर्णानां यणं विधत्ते अत यत्र यत्र सवर्णाज्भिन्नाच्पदबोध्यवर्णाव्यवहितपूर्वत्वविशिष्टेक्पदबोध्यत्वम् तत्र तत्र सर्वत्र यण् भवति। असति बाधके इति कथनेन तु चक्रिअत्र न दोष:। (म-भा-नि) वैशद्येन महाभाष्यनिगूढाकृत्तौ विषयोऽयं चर्चित:।

एवमेव प्रकृतेऽपि काकादिशब्दानामपि अनुशासनापत्ति: सा मा भूत इति हेतोर्लक्षणे प्रतीतपदार्थको लोके ध्वनि: शब्द: इत्युच्यते। नहि काकादिशब्दै: लाकेप्रसिद्ध प्रतीतिरित्यतो नातिव्याप्ति:। तर्हि इदमेव शब्दस्य लक्षणं स्यात् प्रतीतिपदार्थको ध्वनि: शब्द: लोक इति इति पदं कथं निवेश्यते तत्रेच्यते यत् लोके इति पदाभावे काकादिशब्दानामपि योगिनां योगबलात् प्रत्यक्षात्मकादिज्ञानसम्भवेन तेषामपि प्रतीतपदार्थकत्वात् काकादिध्वनावपि शब्दरूपोद्देश्यतावच्छेदकस्य सत्वात् विधेयस्य अनुशासनस्याभावात् नियमभघौपत्ति:, अतोऽत्र लोके इति पदम् देयम्, लोकपदेन योगिनाम् अग्रहणम् ''अत्र शब्दस्य न हि सामान्यस्य शब्दस्य लक्षणम् प्रत्युत् अनुशासनीया: शब्दा: तेषामेवेदं लक्षणमिति हृदयम्'' (म-भा-नि-)

लक्षणमपि द्विविधं भवति- स्वरूपमलक्षणम्, तटस्थलक्षणमच,

**१. स्वरूपमेवलक्षणम् स्वरूपलक्षणम्**

इतरानिरुप्यं यल्लक्षणं तत्स्वरूपलक्षणम् शिखामणिकार: (मा-भा-नि-पृ-३.१) यदि स्वरूपमेव लक्षणं वर्तते तर्हि तत्र किं लक्ष्यं किमच लक्षणं भवति तत्र समाधीयते यथा आरोपितं भेदमादाय एकस्मिन्नेव कार्यकरणमभाव: कल्प्यते तथैव एकस्मिन्नपि वस्तुनि काल्पनिकभेदमादाय स्वरूपलक्षणव्यवहार: क्रियते।

**द्वितीयमच तटस्थलक्षणम्-**

यावल्लक्ष्यकालमनवस्थितत्वे सति यद् व्यावर्तकं तत् तटस्थलक्षणम्। यथा गन्धवत्वं पृथिव्या: लक्षणम्। प्रसघौ येनोच्चारितेन यल्लक्षणं विद्यते तत् तटस्थलक्षणम्, यतो हि येन पदेन स्फोटशब्दरूपलक्ष्येतरस्य ध्वने: येन पदेन निवेशात् इदं शब्दलक्षणं तटस्थलक्षणम्। प्रतीतपदार्थक: इत्यत्र क: समास: विचार्यते कर्मधारयो वा बहुव्रीहिर्वा चेत् कर्मधारय: तदा प्रतीतश्चासौ पदार्थ: प्रतीतपदार्थ: प्रतीतपदार्थ एव स्वर्त्थे क: प्रतीतपदार्थक: तत: प्रतीतपदार्थक: इत्यस्य तद्बोधके लक्षणां कृत्वा ध्वनिना सह तस्य सामानाधिकरण्यमुपपद्यते। अथवा बहुव्रीहिसमास: क्रियते-प्रतीत: पदार्थो येन स: प्रतीतपदार्थ: बहुव्रीहिसमासे शेषविभाषा इति सूत्रेण क प्रत्यये इत्याकारै: प्रसिद्धपदार्थक: इत्यत्र कर्मधारयं मत्वा तस्य लक्षणा क्रियते। अत्र प्रतीतशब्दार्थ: प्रसिद्धार्थकार: न तु ज्ञातपर:।

**वाक्यपदीयदृष्ट्या स्फोटध्वनिस्वरूपम्-**

वाक्यपदीयकारेणापि द्वौ शब्दौ प्रतिपादितौ स्फोटात्मक: ध्वन्यात्मकश्च तेनोक्तं यत् उपादानशब्देषु द्वौ शब्दौ वर्तते (वा-प-का-४४)। उपादानशब्दस्यार्थ: वाचकशब्द:। अर्थनिष्ठवाच्यतानिरूपित-वाचकता द्वयो: शब्दयो: वर्तते, स्फोटात्मके ध्वन्यात्मके। यतो हि परारूपं यद् शब्दब्रह्म अथवा पश्यन्तीरूपं यद्ब्रह्म तत्र शब्दार्थयो: पृथक् पृथक्भेद: नैव जायते संहृतक्रमत्वात् तयो: शब्दयो: वाचकत्वं नास्ति। शब्दार्थयो: स्थितिस्तु उच्चारणेन प्रकाशतिस्पफ़ोटे, भवति लोकव्यहारे च ध्वन्यात्मकशब्देऽपि प्रतीयते। वस्तुत: ध्वन्यात्मकशब्दे वाचकता वाक्यपदीयकारेणापि न स्वीकृता। अत एव तेन न्यरूपि यत् एकोनिमितं शब्दानाम् अर्थात् श्रोत्रेन्द्रियेणगृह्यमाणध्वने: वाचकत्वं नास्ति अपितु श्रोतु: श्रोत्रेन्द्रियेणगृह्यमाणध्वनिनाभिव्यमजमान स्फोटे एव वाचकता। स स्फोटात्मक: शब्द: वक्तु: अर्थबोधनेच्छया जायमानप्रयत्नेन कण्ठताल्वाद्यभिघातजन्य वैखरीरूपशब्दानामभिव्यतौ निमित्तं भवति। एक:=स्फोटात्मक: शब्द: शब्दानाम्=ध्वन्यात्मक शब्दानाम् निमित्तं कारणम्। इति कारीकार्थ: अपरस्यार्थ: अपरोऽर्थे प्रयुज्यते अपर: य: वैखरीरूपध्वन्यात्मकशब्द:। अर्थे=अर्थबोधेच्छया स्फोटप्रकाशनाय प्रयुज्यते=उच्चार्यते। अथवा अस्य अयमपि अर्थ: एक: वक्तृगत-वैखरीरूप: शब्द: श्रोतु: हृदयस्थितमध्यमारुपस्फोटात्मकशब्दस्याभिव्यक्तौ निमित्तम् भवति। इति एको=वैखरीरूप: शब्द: अभिव्यक्तौ निमित्तम्=कारणम् शब्दानाम्=स्पफोटात्मकशब्दानाम्। अपरोऽर्थ: अर्थ: प्रयुज्यते इत्यस्यार्थ:- अपर:=श्रोतु: हृदयस्थित: स्फोटात्मक: शब्द: अर्थे=अर्थबोधाय प्रयुज्यते=उपस्थाप्यते।

**नागेशदृष्ट्या स्पफ़ोटात्मक शब्दस्वरूपम्-**

परमेश्वरात् त्रिगुणात्मकाव्यक्तावस्थायां बिन्दुनामक: पदार्थ: प्रादुर्भूव अस्मिन् बिन्दौ त्रय: अंशा: अचिद्रूपांश: (अज्ञानरूपम्) बीजरूपम्भवति। द्वितीय: अंश: चिदचिद्मिश्रितनादांश: तृतीयांश: चिन्मात्रम्भवति स: बिन्दु: इति रूपेण भवति। अस्मात् चिदंशात् बिन्दो: शब्दब्रह्मरूपात्मकनादो जायते। प्रपमचसारग्रन्थेऽपि एवं वर्णितं यत् स्थूलद्वितीयबिन्दो: विस्फोरणे अव्यक्तरवो जायते रवशब्दार्थ: अत्र ध्वनि: पदेनेत्यभिधीयते। स एव रव: शब्दब्रह्म इति पदेन व्यह्रियते। इदं शब्दब्रह्म व्यापकं भवति अथ च प्राणिनां मूलाधारे स्थितं भवति। संस्कारयुक्तवायुवेगेन सम्पृक्ते सति तस्य शब्दब्रह्मण: अभिव्यक्तिर्भवति। अत्र जिज्ञासोदेति यत् संस्कारयुक्त: वायु: क: तत्रेच्यते यत् वर्णोच्चारणेच्छया जायमानप्रयत्नेन यदा वायो: परया सह योगो भवति स वायु: संस्कारयुक्तवायुर्भवति तेन वायुना वाच: अभिव्यक्तिर्जायते। मूलाधारात् संस्कृतवायु: नाभिचक्रे समायाति तदा मूलाधारस्थितपरावागेव अभिव्यक्त-अवस्थायां सम्प्राप्नोति नाभिचक्रे सम्प्राप्ता संस्कृतवायुना वाक् पश्यन्ती पदेनाभिधीयते। अस्या: मानसप्रत्यक्षं भवति। परावाक् सूक्ष्मरूपा पश्यन्ती सूक्ष्मतररूपा अस्या: अधिष्ठतादेवता ईश्वरो भवति। योगिनां निर्विकल्पकसमाधौ परावाच: प्रत्यक्षं भवति। सविकल्पकसमाधौ पश्यन्त्या: प्रत्यक्षं भवति। पश्यति सर्वं प्रपमचं स्वस्मिन् या सा पश्यन्ति, परया या सा दृश्यते सा पश्यन्ती।

नाभिचक्रेण उपरिसमागच्छन् संस्कृतवायुः हृदयदेशं प्राप्नुवन् पश्यन्तीरूपवाचम् अभिव्यमजयति पश्यन्तीरूपवाचः हृदयदेशे मध्यमा वाक् इति संज्ञा भवति। इयं वाक् हिरण्यगर्भपदेनाभिधीयते। इयं वाक् स्वात्मानं प्रकटयति । बुद्धिविषयीभूता भवति। अर्थात् बुद्धङ्ग अस्याः वाचः ग्रहणं जायते। अयमेव संस्कृतवायुः मुखप्रदेशं सम्प्राप्नुवन् मध्यमावाचं अभिव्यिषिक्त। चतुर्षु वाक्षु मध्यमायां यो चेतनरूपः नादांशः स एव स्फोटः स च एकः नित्यः अखण्डः। प्रत्येकं वर्णैः सह अन्तिमवर्णेन सह अभिव्यघ्यः सन् अर्थबोधने क्षमो भवति तस्मात् सर्वेषां ध्वनिवर्णानाम् अभिव्यक्तौ कारणता विद्यते। पुनः शघ्क्यते यत् अभिव्यक्तेन स्फोटेन सर्वदा शाब्दबोधो स्यात्, तत्रेच्यते घटरूपस्पफ़ोटात् या बोध्यघटार्थाकार वृत्तिः तस्याः वृत्तेः एव घटस्पफ़ोटाकारवृत्तेर्नाशो जायते, अतः पुनः तस्माद् अर्थबोधो न जायते। अयं स्फोटः सर्वेषां प्राणिनां हृदयदेशावच्छिन्नाकाशे स्थितः सन् विभुः व्यापकः एकः निरवयवः आकाशवत् वर्तते तत्र व्यापकत्वात् सर्वत्र सर्वेषां सर्वदा शब्दप्रत्यक्षं स्यात् तत्र वक्तुं शक्यते प्रत्यक्षविषयीभूतः स एव शब्दः यः कर्णशष्कुलीसम्बद्ध-आकाशदेशस्थः वर्तते। (वै-सि-म-श-प्र) वाक्यपदीयकारेणाप्याह यत् सर्वत्र व्यापकः शब्दः वक्तुः प्रयत्नेन श्रोत्रदेशं प्राप्तः शब्दः एव प्रत्यक्षविषयीभूतो भवति (वा-प-का-११६) तस्याः अभिव्यक्तौ कण्ठदेशगावाक् निमित्तं भवति इयं कण्ठदेशस्थावाक् परश्रवणगोचरा भवति। अस्याः वैखरी संज्ञा भवति। मध्यमावाक् एव स्फोटात्मकः शब्दः वर्तते, स च स्फोटात्मकः शब्दः मध्यमायाः वाचः जायमानः यः नादः (मध्यमानादः) तस्माद् नादात् अभिव्यक्तो भवति।

अयमच स्फोटः आन्तरप्रणवरूप एव। कुमिजका टीकायाम् प्रणवस्य परापराभ्यां भेदद्वयं निरूपितम्। (वै-सि-म- पृ-५७७) तत्र पररूपणवः ब्रह्मात्मकः अपररूपप्रणवः शब्दात्मकः। अयमच प्रणवः अकार-उकार-मकार रूप मात्रत्रयात्मकः (वै-सि-म-कु) अयं त्रयात्मकः वर्णः सत्वरजतमरूपगुणात्मकः, ऋग्यजुसाम इति नामरूपात्मकः, भूर्भवःस्वः त्रयलोकात्मकः, जाग्रत्स्वप्नसुषुप्ति, त्रिवृतिरूपात्मकः आन्तरज्ञाता एव स्फोटः इति विषये वाक्यपदीय-कारेणापि व्यलेखि

**अथायमान्तरोज्ञाता सूक्ष्मवागात्मना स्थितः।**
**व्यक्तये स्वस्य रूपस्य शब्दत्वेन विवर्तते।।**

(वा-प-का-११२)

अयं शब्दः एव आन्तर ज्ञाता वर्तते। आन्तरज्ञाता इत्यस्यार्थः टीकाकारैः क्रियते वृत्तिविशिष्टमन्तकरणम् (वा-प- ब्र ११२) आन्तरज्ञातासूक्ष्मरूपात्मकं ज्ञानं वर्तते। स्वस्य अभिव्यक्तये स्थूलशब्दरूपेण परिणमते अर्थात् अन्तःस्थितं ज्ञानमेव शब्दत्वेन विपरिणमते। शब्दः ज्ञानस्य परिणामः इति न्यरूपि अचार्यैः (वा-प-टी-सूर्य) इदं ज्ञानं शब्दरूपेण कथं परिणमते तत्रेच्यत यत् अर्थबोधनेच्छया वृत्तिविशिष्टमन्तकरणं यत् ज्ञातारूपं वर्तते तदेव मनोभावं प्राप्नोति तद् मनः जठराग्निना सह संयुज्य परिपक्वास्थायां सत्यां प्राणवायुं प्रेरयति ततः वृत्तिविशिष्टमन्तकरणेन सह प्राणवायुः उपरि याति मनोभावं प्राप्य अन्तःकरणत्वस्य आश्रयतां प्रासवायुः तेजसः साहाबयेन बहिः शब्दरूपेण भासते। अन्तःकरणतत्वस्य---(वा-प-का-) एष विचारः पाणिनिशिक्षायामित्थं निरूपितम् आत्माबुद्धङ्ग समेत्यर्थान् ---(पा-क्षि)

यथा अकाकाशः नित्यः एकः विभुः तथैव स्फोटोऽपि नित्यः एकः विभुः वर्तते। यथा अकाशे घटाकाशपटाकाशद्युपाधिभेदेन भेदव्यवहारसत्वेऽपि तस्य नित्यत्वम् अखण्डत्वं नैव नश्यते तद्वत् स्फोटेऽपि पदस्फोटे वर्णस्फोटेत्यादि भेदेस्वपि तस्य एकत्वं अखण्डत्वं विभुत्वं नैव विनश्यते। प्राकृतध्वनिना स्फोटस्याभिव्यक्तिर्भवति। प्राकृतध्वनेः वर्णात्मकत्वात् पदात्मकत्वात् तस्मात् स्फोटस्य प्राकाश्यमानत्वात् स्फोटेऽपि वर्णपदादिभेदाः जायन्ते अत एव वाक्यपदीयकारेणोक्तं-

**स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः**

(वा-प-का-१.५)

नित्येषु पदार्थेषु कालकृतभेदो नैव जायते तस्मात् स्फोटस्य नित्यत्वादेव तत्र कालकृतभेदाभावः वर्तते। प्राकृतध्वनिनाभिव्यव्य-ज्यमानत्वात् ध्वनिगतकालभेदमारोप्यमाणत्वात् तत्र कालकृतभेदो भवति अत एव प्राकृतध्वनेः वर्णात्मकत्वात् पदात्मकत्वाद् वाक्यात्मकत्वात् तत्रपि (स्फोटे) वर्णपदवाक्यादिभेदो दृश्यते। वाक्यपदीयकारेण मीमांसकमतं प्रतिपादयन्नाह यत् वर्णानामेकत्वं विद्यते पदानां भेदेऽपि यथा अर्कः अश्वः अमरः इत्यादिविभिन्नेषु पदेषु अकार एक एव। तथैव वर्णातिरिक्तं पदं नास्ति पदादतिरिक्तं वाक्यं नास्ति। अर्थात् पदेषु वाक्येषु वर्ण एव दृश्यते वर्णादतिरिक्तं पदस्य वाक्यस्य पृथक् सत्ता नास्ति इति (वा-प-का-७१, ७२) किमच वैयाकरणानां मते अखण्डवाक्यस्य स्फोटस्यैव सत्ता वर्तते नतु वर्णानां पदानां। वाक्येषु पदानां पदेषु वर्णानां पृथक् सत्ता नास्ति वर्णपदादीनि पदेषु प्रकृतिप्रत्ययादयः सर्वे काल्पनिकाः। अखण्डवाक्यस्फोटस्य सारल्येनावबोधनाय एतेषां कल्पनाभूत्। (वा-प-का-७३) वर्णेषु वाक्येषु यत् वर्णावयत्वं पदावयवत्वं प्रतीयते तत् मिथ्या एव मिथ्यात्वं द्विविधं स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम्, यथा-वर्णावयवाश्रयत्वेनाभिमत यावतवर्णनिष्ठात्यन्ताभावप्रतियोगित्वं वर्णावयवेषु वर्तते। द्वितीयं मिथ्यात्वम् अधिष्ठानसत्तात्तिरिक्तसता-शून्यत्वरूपम् यथा-वाक्यस्य सत्तातिरिक्त अन्यस्यापि कस्यापि सत्तायाः अभावः। (वा-प-का-७.३ भा-प्र-)

**ध्वनिस्फोटयोर्भेदः-**

ध्वनिः स्फोटः इति शब्दस्य स्वरूपद्वयं विद्यते स्फोटः अखण्डः नित्यः एको भवति। ध्वनिस्तु खलु ह्रस्वदीर्घप्लुतादिभेदेन विद्यते। ध्वनिः अल्पो भवति मदान् भवति ध्वनिरपि द्विधा प्राकृतध्वनि, वैकृतध्वनिः प्राकृतध्वनौ ह्रस्वदीर्घप्लुतादिभेदः वर्तते। वैकृतध्वनौ द्रुतमध्यमविलम्बितभेदः वर्तते। प्राकृतध्वनेः वैकृतध्वनेरुत्पत्तिर्जायते प्राकृतध्वनिः स्फोटस्याभिव्यक्तौ हेतुर्भवति। वैकृतध्वनिः स्फोटस्य दीर्घकालपर्यन्तं श्रावणप्रत्यक्षं कारयति। वैकृतध्वनिः उत्तमध्यमविलम्बितध्वनेरुत्पत्तौ निमित्तं भवति। (वा-७५) ध्वनिरपि व्यक्ताव्यक्तभेदने द्विधा मनुष्यगतकण्ठताल्वाद्यभिघातजन्यो ध्वनिः

ISSN : 2581-6446

वर्णात्मकः व्यक्तरूपात्मकोऽयं। पशुपक्षादिजन्यध्वनिः अव्यक्तरूपात्मकः। शब्दशास्त्रप्रक्रिया निर्वाहाय शब्देन मनुष्यनिष्ठकण्ठताल्वाद्यभिघातजन्यः ध्वनिरेव ग्राह्यः। तस्यैव प्रतीतपदार्थकत्वात् महाभाष्यकारेण शब्दरूपत्वं मन्यते। कण्ठताल्वाद्यभिघातजन्यध्वनेः वैखरीति संज्ञा जायते। अयं वैखरीध्वनिः परश्रवणगोचरो भवति। मध्यमावचि ध्वनिरुत्पद्यते किमच तस्य श्रावणप्रत्यक्षं न भवति अपितु कर्णप्रधाने शुक्ष्मत्वेन श्रोतुं शक्यते। तस्य ध्वनेः मध्यमानादः इति संज्ञा भवति। ध्वनिकृते नाद इत्यपि पदं व्यवह्रियते अत एवोक्तम्-

**वैखर्या हि कृतो नादः परश्रवणगोचरः।**
**मध्यमया कृतो नादः स्फोव्यमजक इष्यते।।**

(प-ल-म-स्फो-नि-)

अत्र वक्तुं शक्यते यत् मध्यमानादादेव स्फोटस्याभिव्यक्तिर्जायते अतः मध्यमा नाद एव प्राकृतिध्वनिरिति वर्तते। प्राकृतध्वनिगतभेदाः क,ख,ग इत्यादिवर्णरूपाः, कत्वगत्वादिजातिरूपाः, घटपटादिपदरूपाः, वाक्यरूपाश्च तेषां समेषां प्राकृतध्वनेः अभिव्यज्यमानत्वात् स्फोटेऽपि आरोप्यते। स्फोटस्यापि जातिरूपस्फोटः,व्यक्तिरूपस्फोटः इति संज्ञा भवति। ध्वनेः वर्ण पद वाक्य भेदेन भेदो जायते तात्रपि जातिव्यक्तिभेदेन तेषां द्वैविध्यं जातम्, पुनः वाक्यपदयोः खण्ड-अखण्डभेदन द्वैविध्यम् जातम् सर्वं सम्मिल्य अष्टौ स्फोटाः जाताः। वस्तुतः अयं भेदः स्फोटव्यमजकप्राकृतध्वनेरेव वर्तते, वैकृतध्वनेर्न, यतो हि वैकृतध्वनेरूत्पत्ति प्राकृतध्वनेः जायमानस्फोटस्याभिव्यक्त्यनन्तरमेव जायते। तस्मात् वैकृतध्वनिगतभेदेन स्फोटस्य न कश्चन भेदो दृश्यते। प्राकृतध्वनेर्नाम प्रकृतौ भवम् प्राकृतम् प्रकृतिश्च स्वरूपविशेषः स्वभावविशेषश्च स्फोटप्राकृतध्वन्योरभेदात् स्फोट एव तस्य प्रकृतिः=स्वरूपम्, स्वभाव एव । अत एवोक्तं ''प्राकृतो नाम येन विना स्फोटरूपमनभिव्यक्तं न परिच्छिद्यते (वा-प-स्वो- वृ- पृष्ठ-१३०) स्फोटस्वरूपे=स्फोटप्रकृतौ स्फोटस्वभावे वा भवो=वर्तमानः प्राकृतः। अतः शब्दाभिक्तेः प्राक्प्राकृतो ध्वनिर्जायते, शब्दाभिव्यक्त्यनन्तरं वैकृतध्वनिरुत्पद्यते। वैकृतध्वनिः यो हि द्रुतमध्यमविलम्बितभेदात्मकः वर्तते (वा-प-कारिका-७७) तत्र अभ्यास द्रुतवृत्तेः महत्वम्, चिन्तने मध्यमवृत्तेः, शिष्योपदेशाय विलम्बितवृत्तेर्महत्वम्भवति। अत एवोक्तं परमलघुममजूषायां-

**अभ्यासार्थे द्रुतावृत्तिर्मध्या वै चिन्तने स्मृता।**
**शिष्याणाम् उपदेशार्थ वृत्तिरिष्टा विलम्बिता।**

(प-ल-म-स्फो-नि-)

वस्तुतः ध्वनेरेव चत्वारः भेदाः वर्तन्ते ध्वनेरेव वागिति संज्ञा नाद इत्यपि संज्ञा अथवा वैखरी वाचः कृते ध्वनिशब्दः प्रयुङ्क्ते सर्वेषां कृते नादशब्दः अथवा वाक्शब्दः प्रयुज्यते। अत एव चतस्रः वाग् इत्युच्यते। परारूपध्वनिः एव ब्रह्मपदवाच्यः सः अतिसूक्ष्मतमः भवति ततः परं पश्यन्तीरूपं ध्वनिः वर्तते सोऽपि सूक्ष्मः भवति योगिभिः गम्यः भवति। विषयेऽस्मिन् नागेशैः परावाकरूपशब्दब्रह्मणः त्रिकालाबाध्यत्वरूपनित्यता नैव स्वीक्रियते अपितु यावत् सृष्टिस्थायिनी नित्यता स्वीक्रियते (वै-सि- ल-म- पृ-२७५) किमच आचार्यश्रीभर्तृहरिः शब्दब्रह्मणः त्रिकालाबाध्यत्वरूपनित्यतां स्वीकरोति अत एवं तेनोच्यते अनादिनिधनं ब्रह्म-----इति। (वा-प-का-१)

मध्यमारूपः ध्वनिः सर्वेषां मानसप्रत्यक्षविषयीभूतो वर्तते। स्वात्मनि स्थितः सन् शब्दार्थोभयरूपेण तत्र बोधजनकता वर्तते। वैखरीभूतः ध्वनिः स्थूलतमः वर्तते तस्मात् परश्रवणगोचरः वर्तते। वाक्यपदीयकारेण तिस्रः वाचः निरूपिताः पश्यन्ती, मध्यमा, वैखरीति तत्र आचार्यैः टीकाकारैः व्याख्यानेन तेषामपि मतेन चतस्रः वाचः इति निरूप्यन्ते यथा- केवलामनुपश्यतीति वाक्यपदीयकारिकया केवलापदेन परावागिति गृह्यते तथैव त्रबयावाचः परं पदम् अत्रपि पदमित्यस्यार्थः स्थानं कृतं गुरुवर्यैः श्रीरामप्रसादत्रिपाठिभिः पाणिनिव्याकरणे प्रमाणसमीक्षानामके ग्रन्थे। अतः त्रबयावाचः परमं स्थानं परावाग्वर्तते। अत एव स्फोटध्वन्योररस्ति अभेदः स्थानभेदात् अभेदे सत्यपि भेदः दृश्यते इति। विषयेस्मिनचार्यैः बहु व्याख्यायि। अथवा वैखरी वाचः कृते ध्वनिशब्दस्य।

## सन्दर्भग्रन्थसूची

1. महाभाष्यनिगूढाकृतः लेखकः सम्पादकश्च डॉ- देवस्वरूपमिश्रः, प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः १९७८ तमे ख्रैस्ताब्दे।
2. वाक्यपदीयम् भावपदीपव्याख्यया,टिप्पण्या च समलङ्कृतम्। परिशिष्टलेखकः पण्डितश्रीरुद्रप्रसादोऽवस्थी (वि-सं-२०६९, सन् २०१२)
3. परमलघुममजूषा व्याख्याकारः सम्पादकश्च डॉ- जयशङ्करलाल त्रिपाठी, (वि-सं-२०६८, सन् २०१२)
4. वैयाकरणलघुममजूषा कलाकुमिजकाटीकासहिता सरलाहिन्दीव्याख्यासहिता च हिन्दीव्याख्याकारः सम्पादकश्च पं- श्रीरामप्रकाश त्रिपाठी। प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी।
5. पाणिनीयव्याकरणे प्रमाणसमीक्षा, कुलपतेः डॉ- मण्डनमिश्रस्य प्रस्तावनया समलङ्कृता, प्रणेता आचार्यश्रीरामप्रसादत्रिपाठी, प्रकाशकः सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः वाराणसी द्वितीयसंस्करणम् ५००।
6. व्याकरणदर्शने सृष्टिप्रक्रियाविमर्शः, आचार्यरामयत्नशुक्लः, आचार्यरामयत्न-शुक्लः खोजवां वाराणसी (उ-प्र-) प्रथमसंस्करणम्-२००४

*व्याकरणविभागाध्यक्षः*
*केन्द्रियसंस्कृतविश्वविद्यालयः, लखनऊपरिसरः, लखनऊ*



ISSN : 2581-6446

# नागेशाभिमतकरणतृतीयार्थविमर्शः

नीरजकुमारभार्गवः

प्रथमादिषु सप्तविभक्तिषु मध्ये तृतीयाविभक्तिः अन्यतमा वर्तते। सापि द्विविधा कारकतृतीया उपपदतृतीया च। तत्र कारकतृतीयापि द्विविधा कर्तृतृतीया करणतृतीया च। अत्र प्रबन्धे करणतृतीयार्थः कः इति नागेशभट्टानुसारं विमृश्यते। तथाहि श्रीमता नागेशभट्टेन परमलघुमञ्जूषा वैयाकरणसिद्धान्तलघुमञ्जूषा वैयाकरणसिद्धान्तमञ्जूषा लघुशब्देन्दुशेखरः बृहच्छब्देन्दुशेखरः, इत्येतेषु ग्रन्थेषु विभक्त्यर्थो विचारितोऽस्ति, अतोऽत्र तत्तद्ग्रन्थानुसारं तृतीयार्थो निरूप्यते। तथाहि वैयाकरणसिद्धान्तलघुमञ्जूषायां करणतृतीयार्थनिरूपणप्रसङ्गे वदति– ''तृतीयायाः कर्तृकरणे अर्थः। कर्तृकरणयोस्तृतीयेति सूत्रात्''[1]। एवं स्थलान्तरेऽपि वैयाकरणसिद्धान्तलघुमञ्जूषायां वदति–''करणं तृतीयार्थः''[2]। वैयाकरणसिद्धान्तमञ्जूषायां वदति–''कारकतृतीयायाः कर्ता, करणञ्च वाच्यम्, कर्तृतृकरणयोस्तृतीया इति सूत्रस्वरसात्''[3]। एवं करणतृतीयार्थविचारप्रसंङ्गे लघुशब्देन्दुशेखरे वदति– ''करणतृतीयायाः करणत्वशक्तिमान्, क्रियाकारक भावसम्बन्धश्चार्थः''[4]। बृहच्छब्देन्दुशेखरे वदति–''बाणेन हतः इत्यादौ करणतृतीयाया आश्रयोऽर्थः। तस्य स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन क्रियान्वयः। यद्वा करणत्वशक्तिमानेव तृतीयार्थः। तच्छक्तिमत्त्वं च व्यापारवत्त्वेवेति न दोषः''[5]। एवं च शेखरे करणतृतीयार्थः करणत्वशक्तिमान्, क्रियाकारकभावसम्बन्धश्चेति वदति, मञ्जूषायां तु केवलं करणतृतीयार्थः करणमित्येव वदति। एवं बृहच्छब्देन्दुशेखरे करणतृतीयायाः आश्रयोऽर्थः, यद्वा करणत्वशक्तिमानेवार्थः, इति वदति। तथा च त्रिषु ग्रन्थेषु परस्परं मतभेदो वर्तते इति तु नैव वक्तव्यम्। तथाहि यद्यपि त्रिषु ग्रन्थेषु मतभेदः प्रतिभाति परन्तु नागेशनये करणतृतीयार्थः करणशक्तिमान् क्रियाकारकभावसम्बन्धश्चार्थः, इत्येव पक्षः सिद्धान्तो वर्तते अन्यत्र तैः तथैव विभक्त्यर्थनिरूपणात्। अत एव वैयाकरणसिद्धान्तलघुमञ्जूषायां टीकाकारो वदति–''तथा च कर्तृत्वशक्तिमान् कर्तृक्रियाभावः सम्बन्धश्च यथा कर्तृतृतीयाया अर्थस्तथा करणतृतीयाया अपि करणत्वशक्तिमान् क्रियाकरणभावः सम्बन्धश्चार्थ इति बोध्यम्''[6]। तत्र किं नाम करणत्वमिति चेदुच्यते तत्तद्ग्रन्थानुसारं करणस्वरूपम्। तथाहि–

**अत्र परमलघुमञ्जूषा–**

परमलघुमञ्जूषायाम्''स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम्''[7] इति लक्षणं वर्तते करणस्य। अर्थात् यः स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकं भवति तत्करणमुच्यते। यथा रामो बाणेन वालिनं हन्ति इत्यत्र बाणनिष्ठो व्यापारः प्राणवियोगानुकूलव्यापारः तदव्यवधानेनैव प्राणवियोगरूपफलस्य निष्पत्तिः भवति अतस्तत्करणमिति भावः। अत्र फलनिष्पादकत्वं करणत्वमिति प्रोच्यमाने कर्त्रादिषु अतिव्याप्तिः, सर्वेषामेव कारकाणां फलनिष्पादकत्वात्। अतस्तद्वारणाय स्वनिष्ठव्यापाराव्यवधानेन इति विशेषणदलं प्रदत्तम्। एवं च नातिव्याप्तिः। यतोहि सर्वेषु कारकेषु फलनिष्पादकत्वस्य सत्वेऽपि तेषां स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं नास्तीति भावः। अत एव प्रोक्तं नागेशभट्टेन परमलघुमञ्जूषायाम्, ''रामेण बाणेन हतो वाली, इत्यादौ धनुराकर्षणादेर्व्यापारस्य बाणव्यापारात्पूर्वमपि कर्तरि सत्वात्। एवमग्रेऽपि कर्त्रादिपञ्चकारकाणां करणत्ववारणाय व्यापाराव्यवधानेनेति दिक्''[8]।

**अत्र वैयाकरणसिद्धान्तलघुमञ्जूषा–**

तत्र वैयाकरणसिद्धान्तलघुमञ्जूषायामपि इत्थमेव प्रोक्तनागेशेन– ''करणत्वं च करणताशक्तिमत्त्वं सा च शक्तिः यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तन्निष्ठा''[9] इति। एवञ्चानेन वचनेनापि इदमेव समागतं यत् यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तद् करणताशक्तिमत् भवति करणताशक्तिमदेव च करणं भवतीति कृत्वा द्वयोरपि ग्रन्थयोः साम्यं वर्तते।

**अत्र वैयाकरणसिद्धान्तमञ्जूषा–**

तत्र वैयाकरणसिद्धान्तमञ्जूषायां करणलक्षणं प्रतिपादयितुं प्राह नागेशभट्टः–''करणत्वबोधकञ्च सूत्रम् साधकतमं करणम् [पा. सू. 1-4-42] इति। कर्तृव्यापाराधीनयद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तत्र क्रियाकरणमिति तदर्थः''[10]। एवं चानेन वचनेन लक्षणं सिध्यति–कर्तृव्यापाराधीनयद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तत्करणमिति। यथा चैत्रः काष्ठेन तण्डुलं पचतीत्यादौ कर्ता चैत्रः तदीयव्यापारः अग्निप्रज्वालनादिव्यापारः, तदधीनव्यापारः काष्ठस्य व्यापारः, तदव्यवधानेनैव पाकक्रियायाः निष्पत्तिः विवक्ष्यते, अतस्तत्तत्र करणमिति भावः।

अत्र केवलं यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिर्विवक्ष्यते तत्करणमिति प्रोच्यमाने सति चैत्रेण पचति, काष्ठं चैत्रेण पचतीत्यादि–प्रयोगापत्तिः स्यात् तच्च नेष्टम्, अतस्तद्वारणाय कर्तृव्यापाराधीनेति विशेषणं प्रदत्तं लक्षणे तथा च न दोषः, स्वस्य स्वव्यापारानधीनत्वात्। तथा चाह नागेशभट्टः–''चैत्रश्चैत्रेण पचति, काष्ठं चैत्रेण पचतीत्यादिव्यावृत्त्यर्थं कर्तृव्यापाराधीनेति''[11]।

**अत्रायं विशेषः–**

परमलघुमञ्जूषायां यल्लक्षणं वर्तते तद्विवक्षापदघटितं नास्ति किन्तु वैयाकरणसिद्धान्तलघुमञ्जूषायां वैयाकरणसिद्धान्तमञ्जूषायां च यल्लक्षणं तद्विवक्षाघटितं वर्तते। एवञ्चोभयोः लक्षणयोः भेदो वर्तते इति नैव शङ्कनीयम्, उभयत्रापि विवक्षाघटितलक्षणे एव नागेश्स्याभिप्रायो वर्तते। स्थाल्यां पचति, स्थाल्या पच्यते, इत्यादिप्रयोगदर्शनेन विवक्षाया परमावश्यकत्वात्। एवं च यदा अधिकरणादिव्यापाराव्यवधानेनापि

फलनिष्पत्तिर्विवक्ष्यते तदा तेषामपि करणत्वं भवत्येव। तथा च स्थाल्यां पचति, स्थाल्या पचति, इत्युभयोरपि प्रयोगयो: विवक्षया सिद्धि: भवति। विवक्षाघटितलक्षणे च भर्तृहरिरपि प्रमाणम्। अत एव भर्तृहरिरप्याह –

**क्रियाया: परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।**
**विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्[12]।।**

अयमर्थ:-यस्य कारकस्य व्यापारादनन्तरमव्यवधानेन क्रियाया: परिनिष्पत्ति: संसिद्धिर्यदा यत्र विवक्ष्यते तदा तत्र तस्य करणत्वं स्मृतमिति योजना। तथा चाव्यवधानेन क्रियासंसाधकत्वप्रकारकेच्छीयमुख्य-विशेषतावत्त्वं करणस्य लक्षणं तदेव च तस्यातिशय इति प्रकृतशङ्काया: समाधानं बोध्यम्।

अयं भाव:-खले कपोतन्यायेन एककाले सम्मिल्य क्रियाया: सिद्धौ उपकुर्वत्सु सर्वेष्वपि कारकेषु मध्ये यद् विवक्षया प्राप्तातिशयं साधकतमं तदेव करणं भवति। तथाहि-दात्ररूपं करणं छेद्यं भावमनुप्रविश्यावयवविभागं संसाधयत् छिधिधातुवाच्यछेदनरूपक्रिया-यामधिकरणादिकारकान्तरेभ्य: प्रकृष्टोपकारकतामासादयति। एवं चक्षु: प्रणिधीयमानम्-अवधानपूर्वकं दृश्ये संयोज्यमानम् इतरकारकापेक्षे या प्रकृष्टोपकारकत्वमासादयति इत्यादिकं करणमुदाहर्तव्यम्। साधनव्यव-हारस्य च बुद्ध्यवस्थाविशेषरूपविवक्षाधीनत्वात् विवक्षाविषयत्वमापन्न एव ह्यर्थो व्याकरणे तत्तत्कारकरूपतया प्रयोगाङ्गम्, न बाह्यवस्तुसत्तये-त्यभिप्राय:। तथा च बलेन लुनाति आलोकेन पश्यति इत्यादौ दात्रादिकं साधकतमत्वाविवक्षया अनादृत्य साधकतमत्वेन विवक्षितं वलादिकरणम्।

**वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत:[13]।।**

अयमर्थ:-तत्करणम्, वस्तुत: यत्किञ्चिद् वस्तु आश्रित्य, अनिर्देश्यम्, इदमेव करणम्, इदं करणमेव इति निरूपयितुं न शक्यते। आद्ये असिदात्रादिकमेव करणम्, नतु स्थाल्यादिकमिति वक्तुं न शक्यते। स्थाल्या पच्यते इति स्थाल्यादेरपि करणत्वस्य विवक्षाधीनस्य दृष्टत्वात्। द्वितीये असिदात्रादिकं करणमेव इत्यपि निर्देष्टुं न शक्यते। असिश्छिनत्ति इत्यादौ तत्र कर्तृत्वस्यापि दर्शनात्। अयं भाव:-इदमेव नियतजातीयं वस्तु असिदात्रादिकं कारणं नान्यदित्येवं निरूपयितुं न शक्यते। यस्मात्र किमपि वस्तु व्यवस्थितं करणतया नियतमस्ति। अधिकरणत्वेन प्रमितापि स्थाली सूक्ष्मतरकपालत्वात् शीघ्रतरं पाककार्ये समर्थतया अनुभवत्येव विवक्षाकृतं करणत्वम्। तथा हि लोके स्थाल्या पच्यते इति करणतृतीयान्त: प्रयोग: प्रसिद्ध:। क्रियासिद्ध्यनुकूलावयवसन्निवेशा हि स्थाली आर्द्रेन्धनरूपकरणापेक्षया पाकक्रियासिद्धौ प्रत्यासीदति। अत: करणापेक्षयात्राधिकरणस्य साधकतमत्वेन करणत्वविवक्षया स्थाल्या पच्यते इति प्रयोग इति।

एवं च सिद्धान्तलघुमञ्जूषोक्तलक्षणे विवक्ष्यते इति पदप्रयोगेण भर्तृहरिवचने विवक्षा इति पदप्रयोगेन चेदं सूचितं भवति करणत्वं विवक्षाधीनमेव विवक्षानिमित्तकमेव न तु बाह्यवस्तुनिमित्तकमिति भाव:। अर्थात् इदमेव वस्तु करणमिति न नियम:, अपितु विवक्षयैव करणस्य निर्धारणं भवति। तथा च यदा दात्रस्य करणत्वेन रूपेण विवक्षा क्रियते तदा दात्रेण लुनाति, इति प्रयोगो भवति, यदा च दात्रस्यानादरेण बलस्यैव करणत्वरूपेण विवक्षा क्रियते तदा बलेन लुनाति, इत्येष: प्रयोगो भवति। अत एव अधिकरणत्वेन निश्चिता स्थाली विवक्षाया करणरूपमपि धारयति। अत एव वदति नागेश:-''विवक्ष्यते इत्यनेन विवक्षैव व्याकरणेऽङ्गं न बाह्यवस्तु सत्तेत्युक्तम्। अत एव दात्राद्यनादरेण बलस्य तत्त्वविवक्षायां बलेन लुनातीत्यादि भवति, तदाह वस्तुत: इति। इदमेव वस्तु करणमिति न नियम:। निश्चिताधिकरणत्वापि स्थाली तनुतरकपाल-त्वात् शीघ्रतरपाकसाधनत्वेनानुभवति वैवक्षिकं करणत्वमित्यर्थ:''[14]। अत्र भर्तृहरिवचने विवक्ष्यते इति कथनेन विवक्षैव व्याकरणेऽङ्गं न बाह्यवस्तु इत्युक्तं भवति।

अथ यथा चैत्र: स्थाल्यां गृहे अग्निना तण्डुलं पचतीत्यादौ अनेककारकाणां यथा कर्तृसमवाये स्वातन्त्र्येण विवक्षा नैव भवति तर्हि अश्वेन दीपिकया पथा याति, इत्यादौ कथं युगपदनेकेषां करणत्वेन विवक्षा भवतीति तु नैव वक्तव्यम्, यतोहि विषयेऽस्मिन् आचार्यो भर्तृहरि: वदति-

**स्वकक्ष्यासु प्रकर्षश्च करणानां न विद्यते।**
**आश्रितातिशयत्वं तु परतस्तत्र लक्षणम्[15]।।**

अस्यार्थ:-स्वकक्ष्यासु यत्र बहूनां करणत्वं तत्र स्वासु स्वासु करणभावावस्थासु करणत्वेन सजातीयापेक्षया साधकतममित्यत्र तमप्प्रत्ययवाच्य: करणानां प्रकर्षश्च न विद्यते, सर्वेषां करणानां तत्र समानत्वात्। तत्र तु यत्र बहूनां करणत्वं तत्रापि अश्वेन दीपिकया पथा याति, इत्यादौ परत: साधनान्तरेभ्य: कर्त्रादिभ्य:, आश्रितातिशयत्वम्-आश्रितोऽतिशयो यत्र स तथा तत्वं करणलक्षणम्। तथा च क्रियासिद्धौ इतरकारकापेक्षया प्रकृष्टोपकारकत्वं करणत्वमिति यत्र बहूनां करणत्वं तत्र सर्वेषां करणत्वोपपत्तिरिति।

अयं भाव:-स्वस्यां स्वस्यां कक्ष्यायां करणभावावस्थायां करणत्वेन सजातीयापेक्ष: क्रियासिद्धौ प्रकर्षोऽत्र, साधकतममित्यत्र तमप्प्रत्ययवाच्यो नाश्रीयते, अपि तु इतरकारकवत् करणेऽपि अनुगतस्य साधनसामान्यस्य साधनत्वरूपस्य धर्मस्य इतरकारकापेक्ष एव प्रकर्ष:, साधकतममित्यत्र तमप्प्रत्ययवाच्यस्तत्र बहुकरणस्थले सर्वेषां करणत्वमावेदयते। साधकतममित्यत्र हि कारकसामान्यवाचकात् साधकशब्दात् तमबुत्पन्नस्तत एव साधकादेव प्रकर्षं गमयति, नतु साधकतमात्। कारिकायां परत इत्यस्य करणव्यतिरिक्तेभ्य कर्त्रादिभ्य: इत्यर्थस्यैव विवक्षणात्। एवं करणत्वजातीयापेक्षस्य प्रकर्षस्यानाश्रयणाद-श्वादीनां सर्वेषामपि इतरकारकापेक्षया प्राप्तप्रकर्षाणां करणत्वमविरुद्धम्। तथाहि-अश्वो देशान्तरप्राप्तिरूपे गमनक्रियाफले कर्त्राद्यपेक्षया प्रकृष्टोपकारक:, स्वव्यापारद्वाराऽव्यवधानेन फलजनकत्वात्। पन्था अपि साधुश्चोराद्युपद्रवरहित: प्रतिबन्धकविरोधिराजपुरुषादिधारणेन प्रतिबन्धकाभावसम्पादनद्वारा इतरकारकापेक्षया प्रकृष्टोपकारक:, दीपिका

अपि तमःसंहितमालोकनापसारयन्ती प्राप्नोति प्रागुक्तरीत्या प्रतिबन्धकाभावसम्पादनेन साधनान्तरापेक्षया प्रकर्षमिति।

**अत्रायं विशेषः-**

अत्र च लक्षणे करणसंज्ञाविधायकं साधकतमं करणम् इति सूत्रमेव मानम्। तथाहि- साधकतमं कारकं सत् करणसंज्ञं भवति, इति सूत्रार्थः। तत्र सूत्रस्थतमप्प्रत्ययस्यार्थः प्रकर्षः। स च कारकान्तरापेक्षया एव गृह्यते, कारकपर्यायसाधकशब्दादुत्पन्नेन तमपा प्रकृत्यर्थापेक्षस्यैव प्रकर्षस्य बोधनात्, नत्वत्र करणान्तरापेक्षया प्रकर्षः। अत एव देवदत्तः अश्वेन दीपिकया पथा गच्छति इत्यादिप्रयोगाणां सिद्धिः। करणान्तरापेक्षया प्रकर्षस्य ग्रहणे तु कस्यचिदेकस्यैव करणत्वं स्यान्नतु समेषाम् एकस्मिन् काले कस्यचिदेकस्यैव प्रकृष्टत्वात्। अतः कारकान्तरापेक्षया प्रकर्षो न तु करणान्तरापेक्षया। प्रकृष्टत्वं च अव्यवधानेन फलजनको यो व्यापारस्तद्वत्वम्। एवञ्च यद्व्यापाराव्यवधानेन फलनिष्पत्तिः तत्करणम् इतिं सूत्रार्थो भवति। तथा चोक्तं नागेशभट्टेन महाभाष्ये साधकतमं करणम् इति सूत्रव्याख्यानावसरे ''अत्र कारकाधिकारात् क्रियानिरूपितातिशयितकारकत्ववत्करणम् इत्यर्थः। अतिशयश्च यद्व्यापारानन्तरमव्यवधानेन फलोत्पत्तिस्तत्त्वम्'' इति। लघुशब्देन्दुशेखरेऽपि एवमेवोक्तम्''यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम्''[16]। तस्मात् सूत्रप्रामाण्येनापि स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वं करणत्वम् लक्षणमिदं सुसम्पन्नम्।

अथ यथा गंगायां घोषः, गंगायां गावः, इत्यादौ गौणस्यापि अधिकरणसंज्ञा भवति तथैव व्यवधानेन फलोत्पादकस्य गौणस्यापि करणत्वापत्तिः इति त्वत्र नाशंकनीयम् , यतोहि करणसंज्ञाविधायके साधकतमं करणम् इति सूत्रे तमप्ग्रहणेन व्यवधानेन फलोत्पादके करणकत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वं प्रतिपाद्यते, एतत्सूत्रातिरिक्तस्थले च गौणस्यापि अधिकरणत्वादिकं भवतीति तमपा बोध्यते।

अयं भावः-करणसंज्ञाविधायके साधकतमं करणम् इति सूत्रे तमप् ग्रहणं व्यर्थम्। यतोहि- साधकं करणम् इत्येतावन्मात्रोक्तौ क्रियतेऽनेनेति करणम् इति महासंज्ञया साधकस्यैव करणसंज्ञा भविष्यति, लघ्वर्थं हि संज्ञाकरणं तत्र महासंज्ञाकरणे एतत्प्रयोजनम् अन्वर्थस्यैव संज्ञा यथा स्यादिति। एवञ्च महासंज्ञाकरणसामर्थ्यात् कारकाधिकाराच्च साधकस्य करणत्वसिद्धौ तत्र साधकपदं व्यर्थं सत् साधकतमार्थं भविष्यति, एवं च तमबर्थस्य स्वयमेव लाभसिद्धौ सूत्रे तमप्ग्रहणं व्यर्थम्। तथा चोक्तं लघुशब्देन्दुशेखरे नागेशभट्टेन ''कारकाधिकारात्करणल्युडन्तकरणेति महासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः''[17]। एवं च सति प्रकृतसूत्रे तमप् ग्रहणं व्यर्थं सञ्ज्ञापयति अस्मिन् कारकप्रकरणे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति। तथा चोक्तं कैयटेन सूत्रस्यास्य व्याख्यानप्रसङ्गे महाभाष्यप्रदीपे तत्र तमश्रुतिरेतज्ज्ञापयति प्रकर्षप्रत्ययग्रहणमन्तरेणेह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते इति। एवञ्चेह सूत्रे तमप्ग्रहणाभावे साधकतमार्थस्य लाभो न स्यात्, अतस्तदर्थं सूत्रे तमप्ग्रहणावश्यकमिति भावः। एवञ्चात्र सूत्रे तमप्ग्रहणेन गौणस्य करणसंज्ञा नैव भवति। एतज्ज्ञापनस्य फलं तु आधारोऽधिकरणम् इति सूत्रेण गौणस्याप्यधिकरणत्वसिद्धिरूपम्। अन्यथा तत्रापि अधिक्रियतेऽस्मिन् इत्यधिकरणमिति महासंज्ञया आधारलाभे सिद्धे सूत्रे आधारपदं सत् आधारतमार्थं भविष्यतीति सर्वावयवव्याप्त्याधारस्यैव अधिकरणसंज्ञा स्यात्। यथा तिलेषु तैलम्, सर्वस्मिन्नात्माऽस्ति, इत्यादौ। तथा चोक्तं लघुशब्देन्दुशेखरे नागेशभट्टेन ''अधिकरणमित्यधिकरणल्युडन्तमहासंज्ञयैव सिद्धे-आधारग्रहणसामर्थ्यात् सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात्। एवञ्चेदं सूत्रं तिलेषु तैलमित्यादौ एव प्रवर्तेत। न हि गंगा तीरं वा सर्वावयवैर्व्याप्तम्''[18]। इति। एवं चात्र गौणस्याधिकरणसंज्ञा न स्यात्। तमप्ग्रहणेन अस्मिन् कारकप्रकरणे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते, इति ज्ञापने जाते, अत्र सूत्रे व्यर्थम् आधारपदम् आधारतमार्थस्य बोधको नैव भवति। तस्मात् गौणस्यापि अधिकरणत्वसिद्धिः। करणसंज्ञाविधायके साधकतमं करणम् इति सूत्रे तु तमप्ग्रहणेन प्रकर्षस्य प्रतीतिः। तथा चोक्तं नागेशभट्टेन लघुशब्देन्दुशेखरे ''एवञ्च व्यवधानेन फलोत्पादके करणकत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम्। एतत्तमब्वशादेवान्यत्र स्वरितत्वमिति ज्ञायते''[19]। इति दिक्।

**अत्रशाब्दबोधः-**

रामः बाणेन वालिनं हन्ति-इत्यत्र कर्तृप्रत्ययस्थले तिबर्थः कर्ता, तत्र प्रथमान्तार्थस्य रामपदार्थस्य अभेदसम्बन्धेनान्वयः, तिबर्थकर्तुश्च धात्वर्थव्यापारे कर्तृक्रियाभावसम्बन्धेनान्वयः। तृतीयार्थः करणं तत्र प्रकृत्यर्थस्य बाणस्य अभेदसम्बन्धेनान्वयः, करणस्य च क्रियाकरणभावसम्बन्धेन धात्वर्थफले अन्वयः। द्वितीयार्थः कर्म तत्र प्रकृत्यर्थस्य वालिनः अभेदसम्बन्धेनान्वयः, तस्य च कर्मक्रियाभावसम्बन्धेन धात्वर्थफले अन्वयः। धात्वर्थस्य फलस्य च जन्यजनकभावसम्बन्धेन धात्वर्थव्यापारे अन्वयः। तथा चोक्तवाक्यात् बाणाभिन्नैककरणकः वाल्यभिन्नैककर्मकः, यः प्राणवियोगः, तदनुकूलः रामाभिन्नैककर्तृकः धनुराकर्षणादिव्यापारः, इति बोधो भवति।

रामेण बाणेन वाली हन्यते-इत्यत्र तेप्रत्ययार्थः कर्म तत्र वालिनः अभेदसम्बन्धेन अन्वयः, कर्मणश्च निष्ठत्वसम्बन्धेन धात्वर्थफले अन्वयः। बाणपदोत्तरतृतीयार्थः करणं तत्र प्रकृत्यर्थस्य बाणस्य अभेदसम्बन्धेन अन्वयः, करणस्य च स्वनिष्ठव्यापारजन्यसम्बन्धेन धात्वर्थफले अन्वयः। रामपदोत्तरतृतीयार्थः कर्ता तत्र प्रकृत्यर्थस्य रामस्य अभेदसम्बन्धेन अन्वयः, कर्तुश्च निष्ठत्वसम्बन्धेन धात्वर्थव्यापारे अन्वयः, व्यापारस्य च जन्यत्वसम्बन्धेन धात्वर्थफले अन्वयः। तथा चोक्तवाक्यात् रामाभिन्नकर्तृजन्यव्यापारजन्यः बाणाभिन्नकरणनिष्ठव्यापारजन्यः वाल्यभिन्नकर्मनिष्ठः प्राणवियोगः।

रामः बाणेन वालिनं हतवान्-बाणेन इत्यत्र तृतीयार्थः करणमर्थः, तत्र प्रकृत्यर्थस्य बाणस्य अभेदसम्बन्धेनान्वयः, करणस्य च स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन हन्धात्वर्थे प्राणवियोगे अन्वयः, वालिनम्

ISSN : 2581-6446

इत्यत्र द्वितीयार्थः कर्म तत्र वालिनः अभेदसम्बन्धेन अन्वयः, कर्मणः धात्वर्थे प्राणवियोगरूपे क्रियाकर्मभावसम्बन्धेनान्वयः, प्राणवियोगरूपस्य फलस्य व्यापारे अनुकूलत्वसम्बन्धेनान्वयः, व्यापारस्य च प्रथमान्तार्थे रामे आश्रयत्वसम्बन्धेनान्वयः। तथा चोक्तवाक्यात् बाणाभिन्नकरणव्यापारजन्यः वाल्यभिन्नकर्मविशिष्टः यो हि प्राणवियोगः तदनुकूलव्यापाराश्रयः रामः इति बोधः। बाणकरणकः वालिकर्मकः यः प्राणवियोगः, तदनुकूलव्यापारवान् रामः।

रामेण बाणेन वाली हतः–रामेण इत्यत्र तृतीयार्थः कर्ता तत्र प्रकृत्यर्थस्य रामस्य अभेदसम्बन्धेनान्वयः, कर्तुः धात्वर्थव्यापारे जन्यत्वसम्बन्धेनान्वयः, व्यापारस्य च धात्वर्थफले जन्यत्वसम्बन्धेनान्वयः, बाणेन इत्यत्र तृतीयार्थः करणमर्थः, तत्र प्रकृत्यर्थस्य बाणस्य अभेदसम्बन्धेनान्वयः, करणस्य च स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन हन्धात्वर्थे प्राणवियोगे अन्वयः, धात्वर्थस्य प्राणवियोगरूपस्य फलस्य च प्रथमान्तार्थे वालिनि आश्रयत्वसम्बन्धेनान्वयः। तथा चोक्तवाक्यात् रामाभिन्नकर्तृजन्यव्यापारजन्यः बाणाभिन्नकरणनिष्ठनव्यापारजन्यः यो हि प्राणवियोगः तदाश्रयो वाली इति बोधः। रामाभिन्नकर्तृकव्यापारजन्यः बाणाभिन्नकरणकः यः प्राणवियोगः तद्वान् वाली।

**अत्र निष्कर्षः-**

परमलघुमञ्जूषा, वैयाकरणसिद्धान्तलघुमञ्जूषा, वैयाकरणसिद्धान्त-मञ्जूषा, लघुशब्देन्दुशेखरः, बृहच्छब्देन्दुशेखरः, महाभाष्यप्रदीपोद्योतः, इति समेषां ग्रन्थानां पठनेनेदं वक्तुं शक्यते यन्नागेशमते करणतृतीयार्थः करणत्वशक्तिमान् क्रियाकरणभावसम्बन्धश्च। एवं करणत्वं च तन्त्रये स्वनिष्ठव्यापाराव्यवधानेन फलनिष्पादकत्वम्, इति। अत्रैव लक्षणे अन्यवैयाकरणानामपि सम्मतिः। अत एव कौण्डभट्टोऽपि वैयाकरण-भूषणसारे वदति "साधकतमं करणम् [पा. सू. द/49]। तमबर्थः प्रकर्षः। स चाव्यवधानेन फलजनकव्यापारवत्ता। तादृशव्यापारवत्कारणं च करणम्"[20]। एवं वृहद्वैयाकरणभूषणेऽपि वदति "साधकतमं करणम्, तमबर्थः प्रकर्षः, प्रकृष्टं कारणम् इत्यर्थः। प्रकर्षश्च यद्व्यापारानन्तरम-व्यवधानेन फलोत्पत्तिः, तत्त्वम्"[21]। एवं चात्रेदं वक्तुं शक्यते यन्नागेशोक्तं करणलक्षणं सर्वसम्मतं वर्तते।

।। श्रीरामकृष्णार्पणमस्तु।।

## पादटिप्पणी

1. वैयाकरणसिद्धान्तलघुमञ्जूषापत्रसंख्या = 1242, पुनर्मुद्रितसंस्करणम् = 2006, प्रकाशकः = राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली।
2. वैयाकरणसिद्धान्तलघुमञ्जूषापत्रसंख्या = 1252, पुनर्मुद्रितसंस्करणम् = 2006, प्रकाशकः = राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली।
3. वैयाकरणसिद्धान्तमञ्जूषापत्रसंख्या = 168, प्रथमसंस्करणम् = 1977, प्रकाशकः = सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी,उत्तरप्रदेशः।
4. दीपिकाटीकायुतलघुशब्देन्दुशेखरपत्रसंख्या = 480 दशमसंस्करणम् = 2007, प्रकाशकः = चौखम्बाप्रकाशनम्, वाराणसी, उत्तरप्रदेशः।
5. बृहच्छब्देन्दुशब्देन्दुशेखरद्वितीयभागपत्रसंख्या 869, द्वितीयसंस्करणम् – 1998, प्रकाशकः = सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, उत्तरप्रदेशः।
6. वैयाकरणसिद्धान्तलघुमञ्जूषाकलाटीकापत्रसंख्या = 1252, पुनर्मुद्रितसंस्करणम् = 2006, प्रकाशकः = राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली।
7. वंशीटीकायुतापरमलघुमञ्जूषापत्रसंख्या = 135, प्रथमसंस्करणम् = 2006, प्रकाशकः = चौखम्बाविद्याभवनम्, वाराणसी, उत्तरप्रदेशः।
8. वंशीटीकायुतापरमलघुमञ्जूषापत्रसंख्या = 135, प्रथमसंस्करणम् = 2006, प्रकाशकः = चौखम्बाविद्याभवनम्, वाराणसी, उत्तरप्रदेशः।
9. वैयाकरणसिद्धान्तलघुमञ्जूषापत्रसंख्या = 1251, पुनर्मुद्रितसंस्करणम् = 2006, प्रकाशकः = राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली।
10. वैयाकरणसिद्धान्तमञ्जूषापत्रसंख्या = 168, प्रथमसंस्करणम् = 1977, प्रकाशकः–सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, उत्तरप्रदेशः।
11. वैयाकरणसिद्धान्तमञ्जूषापत्रसंख्या = 168, प्रथमसंस्करणम् = 1977, प्रकाशकः–सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, उत्तरप्रदेशः।
12. अम्बाकर्त्रीयुतवाक्यपदीयतृतीयकाण्डद्वितीयभागपत्रसंख्या = 426 प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, उत्तरप्रदेशः।
13. अम्बाकर्त्रीयुतवाक्यपदीयतृतीयकाण्डद्वितीयभागपत्रसंख्या = 426 प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी,उत्तरप्रदेशः।
14. वैयाकरणसिद्धान्तलघुमञ्जूषापत्रसंख्या = 1242, पुनर्मुद्रितसंस्करणम् = 2006, प्रकाशकः = राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली।
15. अम्बाकर्त्रीयुतवाक्यपदीयतृतीयकाण्डद्वितीयभागपत्रसंख्या = 426 प्रकाशकः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी, उत्तरप्रदेशः।
16. दीपिकाटीकायुतलघुशब्देन्दुशेखरपत्रसंख्या = 478 दशमसंस्करणम् = 2007, प्रकाशकः = चौखम्बाप्रकाशनम्, वाराणसी, उत्तरप्रदेशः।
17. दीपिकाटीकायुतलघुशब्देन्दुशेखरपत्रसंख्या = 478, दशमसंस्करणम् = 2007, प्रकाशकः = चौखम्बाप्रकाशनम्, वाराणसी, उत्तरप्रदेशः।
18. दीपिकाटीकायुतलघुशब्देन्दुशेखरपत्रसंख्या = 479, दशमसंस्करणम् = 2007, प्रकाशकः = चौखम्बाप्रकाशनम्, वाराणसी, उत्तरप्रदेशः।
19. दीपिकाटीकायुतलघुशब्देन्दुशेखरपत्रसंख्या= 480, दशमसंस्करणम् = 2007, प्रकाशकः = चौखम्बाप्रकाशनम्, वाराणसी, उत्तरप्रदेशः।
20. प्रभादर्पणयुतवैयाकरणभूषणसारपत्रसंख्या =197, तृतीयसंस्करणम् = वि. सं. 2006, प्रकाशकः = चौखम्बासंस्कृतसंस्थानम्, वारणसी ,उत्तरप्रदेशः
21. बृहद्वैयाकरणभूषणपत्रसंख्या = 109, प्रथमसंस्करणम् = 1985, प्रकाशकः = चौखम्बामरभारतीप्रकाशनम् वाराणसी, उत्तरप्रदेशः।

*सहायकाचार्यः,*
*रामकृष्णमिशनविवेकानन्द शैक्षिकशोधानुसन्धानसंस्थानम्, वेलूरुमठ*

ISSN : 2581-6446

# शब्दाद्वैतम्

कविराजः

भारतीये आस्तिकदर्शनवाङ्मये सृष्टिमभिलक्ष्य तत्र केचन द्वैतं केचन अद्वैतं च मतमामनन्ति। अर्थात् केचनप्रकृतिपुरुषयोः द्वयोः अस्तित्वं स्वीकुर्वन्ति, केचन प्रकृतिपुरुषयोः ऐक्यं स्वीकुर्वन्ति। अद्वैतमते प्रकृतिः ब्रह्मणः शक्तिमात्रम्। अस्याः नास्ति काचित् स्वतन्त्रसत्ता। इयं परंब्रह्मणः एवोत्पद्यते तस्मिन्नेव अवतिष्ठते विलीयते च। यथा स्थूलजगतः ब्रह्मणः एवोत्पत्तिः वेदान्तदर्शनवाङ्मये प्रपञ्चिता तथैव शाब्दिकजगतः उत्पत्तिरपि तत एव भवति। वस्तुतस्तु परंब्रह्मणः शक्तिरपि एकैव तत एव शब्दजालमिदं प्रवर्तते। तस्यामेव पुनः विलीयते। अतः स्पष्टमस्ति यत् शब्दवादिनः अपि अद्वैतमतमेव परिपुष्यन्ति। तथा चोक्तं वाक्यपदीये–

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात्।**

**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते।।[1]**

परं ब्रह्मणः परानाम्नि शब्दोत्पादिका शक्तिः उत्पद्यते। सैव अनादिः शब्दतत्त्वम् अक्षरं शब्दब्रह्म इत्युच्यते। इत एव शब्दात्मिका सृष्टिः प्रजायते। अत्रापि सृष्टौ वेदान्तदर्शनवत् विवर्तवादमङ्गीक्रियते। अर्थात् यथा वेदान्तदर्शने जगत्प्रपञ्चमिदं विवर्तमस्ति न तु विकारम् (परं ब्रह्मणः जगतः प्रक्रिया विवर्तते अर्थात् अतत्त्वतः अन्यथा भासते) तद्वदत्रापिशब्दब्रह्मणः शब्दात्मिकेयं सृष्टिः विवर्तते। सा च अर्थभावेन। सर्वेषां शब्दानामेकत्वमेवाङ्गीकृत्य सर्वेषां शब्दानां सर्वार्थवाचकत्वं–स्वीकुर्वन्तिवैयाकरणाः। उक्तञ्च वैयाकरणसिद्धान्तलघुमञ्जूसायाम्–

''सर्वेशब्दाःसर्वार्थवाचकाः''[2] इति। सर्वेषां शब्दानां सर्वार्थवाचकत्वञ्च परावाचि भवति। तज्ज्ञानं योगीनां कृते भवति। परावाचः स्वरूपं हि इत्थमुक्तम्—''अस्मद्बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानं सृष्ट्युपयोग्यवस्थाविशेषरूपं चेतनमिदं नादमात्रमुत्पद्यते। एतज्जगदुपादानमेव स्वपरादिशब्दैर्व्यवह्रियते। तथाचोक्तम्–

**बिन्दोः तस्माद्भिद्यमानाऽद्रवोव्यक्तात्मकंभवेत्।**

**स एव युतिसम्पनैः शब्दब्रह्मेति गीयते।।[3]**

अर्थात् एतत्सर्वेषां प्राणिनां मूलाधारे संस्कृतपवनचलनेन अभिव्यजते। ज्ञातमर्थं विवक्षोः पुंस इदं इच्छाया जातेन प्रयत्नेन योग एव मूलाधारस्य पवनसंस्कारः तदभिव्यक्तं स्वप्रतिष्ठतया निष्पन्दं परावगित्युच्यते। एतदेवाभिप्रेत्य हरिणाप्युक्तं ?

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।[4]**

वैयाकरणानां मते शब्दब्रह्मणः अपि क्षरणं न भवति। शब्दब्रह्मणः परानाम्नः शक्तेः शब्दजगतः प्रवृत्तिः जायते। ततः प्रवृत्तं सदिदं शब्दतत्त्वं पश्यन्ती, मध्यमा, वैखर्यादिरूपेण स्वस्वरूपं विस्तारयति। नाभिदेशसंस्थिता अर्थैस्सह वायुः पश्यन्तीत्युच्यते। तत्र शब्दार्थयोः पार्थक्यं न प्रतीयते। यथाऽण्डे जीवः रसरूपं भवति, तत्र जीवाण्डयोः भेदो न प्रतीयते। तत अग्रे हृद्देशं प्राप्तं सद् वायुः मध्यमावाग्रूपेण परिवर्तते। तत्र शब्दार्थयोः पृथक् पृथक् अवबोधः योगीनां कृते भवति। ततः कण्ठताल्वाद्यभिघातैः श्रोतृभिर्या श्रूयते सा स्पष्टवाणी वैखरीत्युच्यते। उक्तञ्च–

**परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता।**

**हृद्देशे मध्यमा ज्ञेया स्पष्टवाणी तु वैखरी।।[5]**

इदं शब्दब्रह्म अर्थस्य प्रकाशकत्वात् (स्फुटत्यर्थो यस्मात् इति व्याख्यानात्) स्फोट इति कथ्यते। असौ स्फोटः वैयाकरणनिकाये अष्टविधः प्रसिद्धः। तेषु वाक्यस्फोटस्यैव प्राधान्यं विद्यते। तथाहि उक्तम्–''तत्र वाक्यस्फोटो मुख्यः''[6]

सैव पश्यन्तीमध्यमावैखारीरूपा प्रमा–प्रमाण–प्रमेयभेदेन बहुधाप्रतीयते। यथासुवर्णस्य एकरूपत्वेऽपिकरककुण्डलादिभेदेन वैविध्यता–दृश्यते, तथैवात्रशब्दब्रह्मामायाकल्पित उपाधिभिः वाच्यवाचकत्वेनविश्वेस्मिन्विवर्तते। उपाधयः मायाकल्पितत्वात्तेषुनस–त्यत्वमितिवेदान्तिकानां मतम् अवलम्व्य शब्दब्रह्मणः अनादित्वं पाणिनियकाः प्रतिपादयन्ति। एवं 'शब्दब्रह्मणिनिष्णातः परब्रह्माधिगच्छति' इतिश्रुतिमनुश्रित्य व्याकरणशास्त्रस्य निश्रेयससिद्धौ करणत्वंतैः प्रकीर्तयन्ते।

शब्दाद्वैताश्रद्धधानानां स्वतन्त्राद्वैतवादिनां स्फोटेजगत्कारणत्वे–विवादः। वैयाकरणानां पश्यन्त्यां स्फोटे च नित्यत्वं प्रकल्तितम् अस्ति। अनयोः ऐक्यं वैविध्यं वातैः न स्पष्टम्। स्फोटस्य नित्यत्वेअनर्थक–वाक्येऽपि–सत्यत्वापत्तिः। तस्य सत्यत्वे आप्तपुरुषाणां अनाप्तपुरुषाणाञ्च वाक्यभेदविवेकः नावशिष्यते। उक्तञ्च–

**'स्फोट एव पश्यन्ती तदन्यावाद्वयंभवेत्।**

**तदन्यत्वेतदैक्येवा तदङ्गुल्यग्ररूपया।।**

**वाक्यगताऽत्रसत्यत्वं लभतेन विशेषता।**

**आप्तानाप्तविचारो वा सर्वथैवनिवर्त्तते'।।**

असत्यैः पद–वर्ण–ध्वन्यादिभिः सत्यस्य स्फोटस्य सिद्धिं वा कथं भवेत्। किं च स्फोटस्य पश्यन्तीरूपकल्पने असत्यार्थस्य अनागतार्थस्य च अविधायित्वंन प्रसज्यते। अतः–

ISSN : 2581-6446

**'स्फोटस्यासत्यरूपैर्हिपदार्थैव्यङ्ग्यताकथम्।**

**पश्यन्त्याःसत्यरूपायाःअसत्यैव्यङ्ग्यताकथम्'।।**[9]

पश्यन्त्यां पररूपत्वेप्रमाणाभावात्, वाचि इन्द्रियत्वे च अनयोः परत्वं वैयाकरणानां पारिभाषिक मेव। ब्रह्मणो 'विवर्ते किं वा प्रयोजनम्?' ''लोकवत्तुलीला कैवल्यम्''[10] तैः नरोचते। वाचिपरत्वे इन्द्रियान्तरेऽपि–परत्वापत्तिः। विवर्ते पररूपत्वे घटपटादिषु सर्वत्र परत्वं प्रसज्येत। परस्य विश्वमयता स्वीकारे इष्टापत्तिः।

**'परं परत्वं गहनादनादिम् एकं विशिष्टं बहुधा गुहाषु।**

**सर्वालयं सर्वचराचरस्थं त्वामेवशम्भुं शरणं प्रपद्ये'।।**[11]

किञ्च–

**'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते।**

तदेवं ब्रह्मत्वं विद्धिनेदं यदिदमुपासते'[12]। इत्यादिश्रुत्या च वाचि परत्वं निरस्यते। स्वतन्त्राद्वैतवादिनां प्रकाशविमर्शरूपेपरत्वे ब्रह्माद्वैतवादिनां सच्चिदानन्दब्रह्मणि परत्वं सिद्ध्यति। तदेवमाण्डूक्योपनिषद्रीत्या ''ओमित्येकाक्षरमिदं सर्वं''[13] ''सोऽयमात्माऽध्यक्षरमोंकारोऽधिमात्रं पादमात्रा। मात्राश्चपादाकारोकारमकारइति'। इत्यादिना ब्रह्मणो वाचकस्य अकार–उकार–मकारालंकृत प्रणव एव शब्द–ब्रह्मेतिग्राह्यम्। अतः वाच्यवाचकयोः अभेददर्शनात् शब्दब्रह्मणो ओंकारस्य सम्यक् अवबोधने परब्रह्म अधिगच्छतीति वचनं न शंकनीयम्।

## पादटिप्पणी

1. वाक्यपदीयम् कारिका 2
2. वै.सि.ल.म.,पृ
3. वै. सि.ल.म., पृ.271
4. वाक्यपदीयम्, कारिका–1
5. पाणिनीय शिक्षा श्लो.–3
6. वै. सि. ल. म. पृ 1
7. अमृतविन्दूपनिषद्
8. शिवदृष्टिः, आह्निक 2, कारिका 56,59
9. शि.दृ., आ.2, का.60
10. ब्र. सू. 2-1-34
11. परमार्थसार, मङ्गलम्
12. के.उ.,ख.1, मं 4
13. मा. उ., मं.1
14. मा. उ., मं. 8

*शोधच्छात्रः, धर्मागमविभागः*

*संस्कृत-विद्या-धर्म-विज्ञानसंकायः*

*काशी-हिन्दू-विश्वविद्यालयः, वाराणसी*



ISSN : 2581-6446

# व्याकरणस्य दार्शनिकपक्षः- शब्दार्थसम्बन्धः

डॉ. सविता

**शब्दार्थसम्बन्धविवेचनम्-**

व्याकरणं खलु शब्दानुशासनमिति कथ्यते। इह प्रकृतिप्रत्यय-विभागेन सामान्यविशेषवतां लक्षणेन च शब्दानां साधुत्वस्यानुशासनं क्रियते। अर्थप्रत्यायनार्थः शब्दप्रयोगो भवति। स च अपभ्रंशैः असाधुभिरपि शब्दैः भवितुमर्हति, तथापि साधुभिरेव शब्दैरर्थबोधः कार्य इति शिष्टपरम्परा। अत्र च हेतुर्भगवता पतञ्जलिना दर्शितः-

'समानायामर्थगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेत्येवं क्रियमाणमभ्युदयकारि भवतीति'[1]

अत एवोच्यते 'न म्लेच्छितवै नापभाषितवै। म्लेच्छो हवा एष यदपशब्दः। म्लेच्छो मा भूमेत्यध्येयं व्याकरणम्'[2]। उदाहरणेनाऽपि भगवान् भाष्यकारः एतत् प्रतिपादयति-'खेदात् स्त्रीषु प्रवृत्तिर्भवति समानश्च खेदविषयो गम्यायां चागम्यायां च'[3]। तत्र धर्मनियमः क्रियते। एवमेव धर्मनियमः साधुशब्दैरर्थबोधने भवति यथा अगम्यागमनेन वर्तमानयुगे 'एड्स' रूपेण महाननर्थः दृश्यते तादृश एवानर्थः असाधुशब्दप्रयोगाद् भाषाविषयेऽपि सम्भाव्यते एतदर्थं धर्मनियमः क्रियते। तादृशीमेवानर्थसम्भावनां निवारयितुं शिष्टैर्व्याकरणस्मृतिर-विच्छेदेन निबध्यते। साधुशब्दैरेवार्थोऽभिधेय इति धर्मनियमः। तथा चोक्तम्-

**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।**
**अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्[4]।।**

भाष्यकारोऽप्याह-

**यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।**
**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः[5]।।**

असाधुशब्दैरर्थाभिधानेऽनर्थाशङ्का महती जायते इत्येवाभिसन्धाय कथ्यते-

**अङ्गीकृतं कोटिमितं शास्त्रं नाङ्गीकृतं व्याकरणञ्च येन।**
**न शोभते तस्य मुखारविन्दे सिन्दूरबिन्दुर्विधवा ललाटे'[6]।।**

अन्यच्चाप्युक्तम्-

**अव्याकरणमधीतं भिन्नद्रोण्या तरङ्गिणीतरणम्।**
**भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम्[7]।।**

एतादृशानामपशब्दजन्यानाम् अनर्थानां निवारणाय व्याकरणमेव साधनभूतमिति भर्तृहरिणापि स्फुटं प्रतिपादितम्-

**तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते[8]।।**

आगमश्चाप्यत्र भवति-

**आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः।**
**तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः[9]।।**

सर्वोऽपि लोकव्यवहारः शब्दमूलः। स च साधुशब्दप्रयोगं विना सर्वथाऽनर्थग्रस्तश्च भवति। अतः साधुशब्दप्रयोगो नितरामावश्यकः। उक्तञ्च-

**इह शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।**
**वाचामेव प्रसादेन लोकयात्रा प्रवर्त्तते।।**
**इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते[10]।।**

शब्दानुशासने लौकिकानां वैदिकानाञ्च शब्दानामनुशासनं क्रियते। तत्र जिज्ञासा भवति कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्। किं शब्द नित्यः आहोस्विद् अनित्यः? तत्राह वार्त्तिककारः 'सिद्धे शब्दार्थसम्बन्धे[11] इति। सिद्धः शब्दः अर्थात् नित्यः सिद्धः अर्थः सिद्धः। तयोः सम्बन्धः सिद्धः। अयं च वाच्यवाचकरूपः सम्बन्धः। एवं मत्वा खलु भगवतः पाणिनेराचार्यस्य सूत्रं प्रवृत्तम्। अत्राह भगवान् भाष्यकारः- कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्च? लोकतः-'लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः'[12]।

लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते। कोऽयं धर्मनियम इति? धर्माय नियमो धर्मनियमः। धर्मार्थो वा नियमो धर्मनियमः। धर्मप्रयोजनो वा नियमो धर्मनियमः। यथा लौकिकवैदिकेषु।

'प्रियतद्धिताः दाक्षिणात्याः। यथा लोके वेदे चेति प्रयोक्तव्ये, यथा लौकिकवैदिकेष्विति प्रयुञ्जते अथवा युक्त एवं तद्धितार्थः। यथा लौकिकेषु वैदिकेषु च कृतान्तेषु'[13]।

एतेन विवेचनेन इदं सिद्धं नित्याः शब्दाः नित्याश्च तेषामर्थाः शब्दानामर्थानां वाच्यवाचकरूपः सम्बन्धोऽपि नित्यः तथा चोक्तं भर्तृहरिणा-

**नित्याः शब्दार्थसम्बन्धाः तत्राम्नाता महर्षिभिः।**
**सूत्राणामनुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः[14]।।**

'नित्यः शब्दः नित्योऽर्थः नित्यसम्बन्धः इति शास्त्रव्यवस्था' इति स्वोपज्ञवृत्तिः। शब्दानां नित्यत्वं पुरस्कृत्यैव एतदुच्यते।

महाभाष्ये-

**सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते[15]।।**

शब्दार्थयोरयं च सम्बन्धः अनादिरेव मन्यते। भर्तृहरिणापि कथ्यते–

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[16]।।**

मनुनाऽपि उक्तम्–

**सर्वेषां तु नामानि कर्माणि च पृथक् पृथक्।**

**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे[17]।।**

ततश्च लौकिकानां शब्दानामपि अर्थेषु सङ्केतः चिरन्तनैः महर्षिभिः शिष्टजनैश्च निर्धारितः। अस्माच्छब्दादयमर्थो बोद्धव्यः इत्येवंरूपे सङ्केते शब्दार्थयोः वाच्यवाचकसम्बन्धो निर्धारितो भवति तथा चोक्तं मम्मटेन– 'अगृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात्' सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति[18]। 'नैय्यायिकानामपि इदं कथनं प्रसिद्धम्–'अस्मात् शब्दादयमर्थः बोद्धव्यः इत्याकारा ईश्वरेच्छा सङ्केतग्रहः' सङ्केतग्रहस्य इमानि साधनानि प्रसिद्धानि

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च।**

**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।**

एतैः व्याकरणोपमानकोशाप्तवाक्यादिभिः निर्धारिते ज्ञाते वा सम्बन्धेऽर्थप्रतीतिर्भवति। सोऽयं शब्दार्थसम्बन्ध एवं ज्ञानजनकः सम्पद्यते। तथा चोक्तम्–

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**

**अनुविद्धमिवज्ञानं सर्वं शब्देन भासते[19]।।**

कविकुलगुरुः कालिदासोऽपि रघुवंशस्यादौ मङ्गलाचरणप्रसङ्गे इममेवार्थम् उपमानद्वारेण प्रस्तौति–

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**

**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[20]।।**

ध्वनिप्रस्थानपरमाचार्य आनन्दवर्धनोऽप्यमुमर्थमित्थं प्रमाणयति–

'शब्दार्थयोर्हि प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव व्यञ्जकत्वलक्षणो व्यापारः सामग्र्यन्तरसम्बन्धादौपाधिकः प्रवर्तते... वाचकत्वं हि शब्दविशेषस्य नियतः आत्मा व्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात्[21] भोजदेवोऽपि सरस्वतीकण्ठाभरणे मङ्गलाचरणं कुर्वन्नाह–

**ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्।**

**यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे[22]।।**

इत्थं सङ्केतग्रहे सति शब्दार्थसम्बन्धः विज्ञातो भवति। स च सङ्केतो व्यक्तौ न गृह्यते आनन्त्यव्यभिचारदोषयोः प्रसङ्गात्। अनन्ताः हि व्यक्तयः, सङ्केतः कर्तुमशक्यः। व्यभिचारश्चापि भवति। बाल्ये व्यक्तौ सङ्केतग्रहे सति गोत्वशुक्लत्वचलत्वोपेताया एव गोव्यक्तेः गोपदेन कथनात् शुक्लः, चलः डित्थ इत्यादेः प्रयोगानवसरः। उक्तार्थानामप्रयोग इति न्यायात्।

व्यक्तेरुपाधिषु जातिगुणक्रियायदृच्छरूपेषु सङ्केतग्रहे सति शब्दार्थसम्बन्धो निश्चितो भवति। अयञ्च सम्बन्धः पूर्वोक्तैः व्याकरणोपमानकोशाप्तवाक्यादिभिः व्यवहारादिभिश्च सम्यग् अवगतो भवति। एतेनैव शब्दार्थसम्बन्धेन विज्ञातेन प्रयुक्तेन च सर्वोऽपि वाग्व्यवहारः सिद्धो भवति।

## सन्दर्भसूची


1. महाभाष्य– 1.1.1, पृ. 35, गुरुकुलझज्जर–संस्करणम्।
2. महाभाष्य– 1.1.1, पृ. 91, गुरुकुलझज्जर–संस्करणम्।
3. महाभाष्य– 1.1.1, पृ. 34, गुरुकुलझज्जर–संस्करणम्।
4. वाक्यपदीयम्– 132 ब्रह्मकाण्ड
5. महाभाष्य– 1–1.1, पृ. 13, गुरुकुलझज्जर–संस्करणम्।
6. प्रकीर्णम्
7. सुभाषितरत्नभाण्डागार– 3.759
8. वाक्यपदीयम्– 14 ब्रह्मकाण्ड
9. भर्तृहरिवाक्यपदीयटीकायाम्–14 ब्रह्मकाण्ड
10. काव्यादर्शः 1.3–4
11. महाभाष्यम् 1.1.1– पृ. 27
12. महाभाष्यम् 1.1.1. पृ. 32–33
13. महाभाष्य– 1.1.1, पृ. 33–34, झज्जरसंस्करणम्।
14. वाक्पदीयम् – 23 ब्रह्मकाण्ड
15. महाभाष्यम्– 1.1.5
16. वाक्यपदीयम्– 1.1 ब्रह्मकाण्ड
17. मनुस्मृति– 1.21
18. काव्यप्रकाशः – 2.7
19. 1.1.14
20. रघुवंशमहाकाव्यम्– 1.1 चौखम्बा संस्कृतप्रतिष्ठान, दिल्ली।
21. ध्वान्यालोकः–3.33 22
22. सरस्वतीकण्ठाभरणम् मङ्गलाचरणम्


*कन्यागुरुकुलमहाविद्यालयः, चोटीपुरा*



ISSN : 2581-6446

# अव्ययनिरूपणम्

श्री पुरुषोत्तमदासः

संस्कृतभाषायां शब्देषु पदेषु वा कारक, वचन, लिंग द्वारा विकारः भवति। परन्तु केचन शब्दाः एतादृशाः यत्र कोऽपि विकारः न भवति। यथाऽस्तीति तद्वत् एव प्रयोगेषु दृश्यते। व्याकरणशास्त्रे अमीषाम् अव्ययपदेन व्यवह्रियते। काशिकायां अव्ययानां परिभाषाऽपिदत्ता अस्ति-

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्।।**

महाभाष्यकारेणापि-स्त्रीपुन्नपुंसकानि सत्वगुणाः एकत्वद्वित्व-बहुत्त्वानि च।

**एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति।**
**ये न वियन्ति तदव्ययम् ( महा. )**

**अव्ययसंज्ञासूत्राणि-स्वरादिपातमव्ययम्** (1/1/37)-

स्वरआदि येषां ते स्वरादयः। स्वरादयः निपाताः चादयः संज्ञाः भवन्ति। यथा स्वर, अन्तर, प्रातर इत्यादयः। चादीनामसत्ववाचिनामेव-ऽव्ययत्वम् स्वरादीनां तु सत्त्ववाचिनां च तदिति व्यवस्थार्थमच।

तद्धितश्चासर्वविभक्तिः - 1/1/38

यस्मात्सर्वा विभक्तिनोपद्यते स तद्धितान्तो अव्ययम्। पचतिकल्पम् इत्यादयः/इषद् समाप्तौ कल्पम्। इति कल्पप्प्रत्यये।

कृन्मेजन्तः (1/1/39) कृद्यो, मान्त, एजन्तश्च तदन्तमव्ययं स्यात्। यथा-स्मारं समारम् आभीक्ष्ण्ये णुमल् च इति स्मृधार्तोणमुल्, अचोऽमिणति इति वृद्धिः रपरत्वम्, नित्यवीप्सयोः इति द्वित्वम्, मातकृदन्तत्वादव्ययत्वम्।

क्त्वातोसुनकसुनः (7/7/50) एतदन्तमपि अव्ययं भवन्ति। यथा कृत्वा इत्यादयः। अव्ययीभावश्च ।(1/1/51) समासेऽपि अव्ययं भवन्ति यथा अधिहरिः। अव्ययसंज्ञाकरणस्य फ्लमस्ति अव्ययादासुपः इति।।

किम् च अद्यावधिं अव्ययानां विषये भेदः दृश्यते क्वचित् शब्दगत भेदः एवमेव अर्थगत् क्वचिदपि क्रमगतो भेदोऽपि लभ्यते। एका मातृका तिस्त्रः पत्रात्मिका मया प्राप्ता तत्र अव्ययानां निरुपणं कृतमास्ते। एतस्यां मातृकायां मया नूतन अव्ययपदानां प्रयोगः दृश्यते। क्रमोऽपि कश्चन भिन्नः अव्ययानां प्रतीयते। अर्थोऽपि भिन्नः एव। अवश्यमेव एतस्याः प्रकाशेन विद्वद्भ्यः उपकाराय भविष्यति।

ओं अथाव्ययानि निरुप्यन्ते चादिर्निपातः चादिरव्ययोनिपातसंज्ञा भवति। च पुनरर्थे, समुच्चचादिषु। वा विकल्पार्थे उपमानार्थे च। ह अह इति द्वौ खेदार्थे। च पादपूरणार्थे, अहहइत्यपि खेदआश्चर्ये च। एवं निश्चयार्थे वा। एवं अनुनाप्रकारेण इत्यर्थे अंगीकरण च पूर्वोक्तस्मरणे च उपमायां च। नूननिश्चये। पृथक् भिन्नार्थे विना अभावार्थे वर्जनार्थे च। नाना बहुप्रकारकवाची नाम इति कोमला। मंत्रणे सम्भावनाय च ऋते विनार्थे। अहो आश्चर्यार्थे। स्वित उत वितर्के। स्वस्तिकल्याणार्थे अस्ति सत्रार्थे मृषा, मिथ्या एतौ द्वौ असत्यार्थे। मिथस् परस्परार्थे। अथ अथो एतौ द्वौ आनंतर्यार्थे, मंगलारंभयोश्च अर्थान्तरकथने च। हि, अत शब्दो गतदिनेऽर्थेश्च। श्वस आगामदिनेर्थे। उच्चै उच्चत्ववाचकः, अतिशयार्थवाचकश्च एवं उच्चकैरपि। नीचैः नीचकैनीयत्वार्थे। स्वरस् स्वर्गार्थे। अन्तर मध्ये। अन्तरेण विनार्थे। अंतरामध्यार्थे। नमस् नमस्कारार्थे। अस्तं भूषायां निवारणे पर्याप्यते सामर्थ्ये च। कृते निवारणे, पूरणार्थश्च सहस्राथे। अमानो ना एते चत्वारः प्रतिषेधार्थे। ईषत् स्तोकार्थे। किल वैराते त्रयोपि निश्चयार्थे स्मरणार्थे च आरात् निकटार्थे दूरार्थे च। दूरात् दूरार्थे। भृशम् अत्यर्थे। यतः यस्मात् कारणात्। ततः तस्मात् कारणात्। स्वराश्च अ, आ, इ, ई, उ, ऊ, ऋ ॠ लृ, लृ, ऐ, ऐ, ओ, औ, एते च निपाताः तत्र अ संबोधने भर्त्सने च। इ संबोधने ऊ रोषोक्तौ अहोर्थे निवारणे च। ॠकार, लृकार द्वौ क्षोभवाचकौ ए सम्बोधने, ऐ आश्चर्ये अनुनये च। ओ औ भवत्यर्थे। औ अंगीकारे, आश्चर्ये च इत्यादिः गणो निपातसंज्ञा भवति। आदिशब्दादऽन्येपि ज्ञेयः। सहसाकं, सार्द्ध, सदृशं, समं एते सहार्थे क्वचित् इष्टपरिप्रश्ने अपि कोमलामन्त्रणे च। ननु निश्चये वितर्के च स्यात्, अनेकार्थवाचक इत्यर्थः। इति समाप्तार्थे, मनो इति वितर्के, विचारणे च। स्वाहादेव हविर्दाने। स्ववापितृहर्विदाने हन्त इति खेदार्थे। चादिर्गणो निपातसंज्ञा भवति तत्रादिर्विभक्त्यर्थे नित्यते। तस्मिन्निति तत्र कुत्र, क्व। यत्र यस्मिन्काले यदा, तदा, कदा तेन प्रकारेण तथा यथा कथं इत्थं तस्मादित ततः कुतः इतरा तस्मात्। अतः सार्वविभक्तिकरनसित्वे के पूर्वस्मिन्निति पूर्वतः परतः पूर्वस्मिन्निति पुरस्तात्, परस्मिन्निति परस्तात्।'आहि च' दूरेऽर्थे वाच्ये सति आहि प्रत्ययो भवति दक्षिणाहि वसति चाण्डालाः, किमः सामान्ये चिदादि भवति कश्चित्, कश्चिद्, क्वचित् तदधीन कात्स्नर्मयोर्वासात् राज्ञः अधीनं राजसात्, सर्वं भस्म भस्मसात्।

अंगीकरणेऽर्थे वाच्ये सति उरीउररीनिपात्येते उरीकृत्यगच्छति। सद्यादिः काले निपात्यते, सद्य, अद्य सपदि। अधुना इदानीम्। सां सम्प्रति। झटिति शीघ्रं। पूर्वेद्युः परद्युः अन्येद्युः अन्येन्यतरेद्युः। यर्हि, तर्हि, कर्हि प्रादिरुपसर्गः। प्रप्रकर्षेः। मांगस्यार्थ। अपि निश्चयार्थः। सम समानार्थे। अनुपश्चादार्थे। अव अवधारणे निर् निराकरणे। दूर दुष्टार्थे। अपि कोमलालापे। सु सुस्पष्टार्थे। उत वितर्के अभिसन् मुखार्थे। प्रति प्रत्यर्थे। परि परार्थे ।उप समीपार्थे। अंतर मध्यार्थे। वितर्केविशेषार्थे। आङ्मर्यादार्थे। निनिशेषार्थे। अधि अधिकारार्थे। अति अतिशयेऽर्थे। अविरप्रगटीकरणे। अयं गण उपसर्गसंज्ञको भवति। प्राग्धातोः। उपसर्गधातोः प्राक्प्रयोक्तव्याः तदव्ययं तदिदं चादिशब्दरुपमव्याजसंज्ञं भवति। आद्यन्ते च कत्वादि प्रत्ययातः शब्दोव्ययसंज्ञको भवति कत्वा, नत्वा, भूक्त्वा आगन्तुम् इत्यादि। अव्ययादिविभर्क्तेलुक् अव्ययात्परस्या विभक्तेः लुग्भवति न तु शब्दनिर्देशे अव्ययानां च न लिंगादिनियमा उच्यते हि-

**सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्नव्येति तदव्ययम् ।।**

उक्तान्यलिंगान्यव्ययानि ।

**सन्दर्भग्रन्था-**

1. रघुनाथपुस्तकालये अप्रकाशिता मातृका।, 2. महाभाष्यम् ।, 3. काशिका, 4. सिद्धान्तकौमुदी। 5. सिद्धान्तकौमुदी (प्रो. अर्कनाथचौधरी)

*केन्द्रियसंस्कृतविश्वविद्यालयः,*
*श्रीरणवीरपरिसरः कोट-भलवाल, जम्मू*

ISSN : 2581-6446

# एक स्वरा आदिवर्णो वृदंताधातवोऽनिट: इति परिभाषा

डॉ. महेन्द्रकुमार:

आकारान्ता इवर्णान्ता उवर्णान्ता ऋकारान्ता'' श्चैकस्वरा:।

सर्वेषु तकार: स च तुल्य रूपाणां शयादीनामुच्चारणमात्रेणादंतत्वा-नुबधंत्वयो विवेकार्थ:, न चालोपस्य नित्यत्वाद् अदंत्वं व्यर्थम्। यत: अग्लोपित्वं स्थानित्वम् चादन्वप्रयोजनम्। यत्रत्वे तेन विद्यते तत्र आलोपविकल्पनम्। यथा अङ्कांगत्कपदे लक्ष्मणि। त क। अङ्कयति। अङ्कापयति। आमिचकत् पक्षे आमचीकत् प्रयोजनाभावाद् लोपविकल्प:। सति च अतिवृद्धि पुकौ। केचित्तु णिचि कृतस्यालोपस्य स्थानिवत्त्वात् क शब्दस्य द्वित्वे अग्लोपित्वान्न सन्वद्भाव इति आंचकदित्युदाहरन्ति। तत्तु न त्रिमुनिमतम्। द्विर्वचने कर्त्तव्ये स्थानिवद् रूपं भवतीति।

द्विर्वचनपदावृत्या कात्यायनेन व्याख्यातम्। तथाच स सनिकृत वृद्धयावादेशस्य द्वित्वे सन्यत: इतीत्वे पिपावयिषतीत्यादे: सिद्धावो: पुम्णज्यपर इति पवर्गे यणि जकारे वा वर्ण परेभ्यासोकारस्य सनियदित्व विधानं तद् द्वित्वे निमित्तेऽपि णौ स्थानिवत्त्वस्य ज्ञापकमिति। तुष्टावयिषतीत्यादौ अव्याप्ति: परिहृता पंतञ्जलिना तु तुल्य जातीयज्ञापकम् इति पर्वगादेरन्यस्मिन्नपि तुल्यवर्ण पर एव स्थानिवत्त्वमिति। अचिकीर्तदित्यादौ नातिव्याप्ति: इत्युक्तम्। नापि भर्तृहरि मतम्। तद्वचनं हि आवृतिशक्तिभिन्नार्थे वाक्ये सकृदपिश्रुते:। लिङ्गात वा तत्र धर्मातद्वा विभागे व्यवतिष्ठते। संप्रसारणसंज्ञाभ्यां तथा स्याद्वर्णवाक्ययो:। प्रविभागस्तथा सूत्रेकेऽस्मिन्नेव जायते। तथा द्विर्वचनेऽचीति तत्रोपायादिलक्षण:। एकशेषेण निर्देशो भाष्येव प्रदर्शित: इति। नाप्यर्वाचीनमतम्। तदेव हि दुर्गगुप्तेन दुर्ग टीकायां त्रिलोचनदासेन कातन्त्रपजिकायां वर्द्धमानमिश्रेण कातन्त्रविस्तारे।

हेमसूरिणा हेमव्याकरणे प्रदर्शितम्। एतच्च ज्ञापकमजन्तस्थ पवर्गपरस्या वर्णेन वेदितव्यमिति। अभिनवशाकटायनेन च शब्दानुशासने अत एव णि निमित्तादपि प्राक् द्वित्वं तच्चावर्ण पर इति। क्षेमेन्द्रेण तु जैनेन्द्रन्यासे स्पष्टमेव उक्तम्। इदमेव ज्ञापकं णौ चासौ एजावादेशौ तयोश्च भवति स्थानिवद्भाव इति ऐजिति वृद्धे: संज्ञा पतमजलेरप्येतानेव ज्ञाप्योऽर्थ: इत्यभिप्राय:। तेन हि पाणिन्यभिमतं स्थानिवद्भावपक्षम-नादृत्य द्विर्वचनं यणयवा यावादेशा लोपोपधा लोपणि लोपकि किनोरूत्वेभ्य: पूर्वविप्रतिषेधेनेति वदत: कात्यायनस्यातिव्याप्ति: दोषमुद्भावयतोक्तम् पूर्वविप्रतिषेधेन हि सतीदं वक्तव्यं स्यात्।

औदौदादेशस्योद्भवति चुटुतुशरादेरभ्यासस्येति। तस्मात् णौ कृत आकारादेश आवदेशश्च स्थानिवदिति निष्कर्ष:। यथा पुस्फारयिषति। चुक्षावयिषति नान्यादेश: यथा अचिकीर्तत् औजिठत्। यत्रु वामनेन काशिकायां पूर्वत्रासिद्धमित्यत्र सूत्रे औजठत्। जिनेन्द्रवुद्धिना च न्यासे तथा व्याख्यातं सरस्वतीकण्ठाभरणकारेण च णिच्चदिति सूत्रितम्। तद्वैयाध्रपद्यवार्तिके श्रोत्रियपाठे श्रद्धाजाड्यमूलम्। एवं हि तद्वार्तिकमभियुक्ता: पठन्ति। श्रुष्कि काशुष्क जंघाचज्ञामिमानौजढस्तथा मतोर्वत्वे झलांजशत्वे गुद्लिषमाभि दर्शनं तंदेवप्रतिसंस्कृत्य जैनेद्रा: पठन्ति क्ष्मामिमानौजिढत् सुधी: पक्कमष्भीषु गोलिण् मान् कुर्वन्ति पिपठी: समुदिति श्रौत्रियास्तु प्रमादात् जि स्थाने जं पठन्ति। अतएव दुर्गसिंहेनैतदेकीयमतत्वेनोक्तं कथमूढमाख्यात्वान् औजिढत् असिद्धंबहिरङ्गमन्तरगे इत्येक इति। अस्यार्थ: शर्ववर्ममते पूर्वत्रासिद्धीयप्रकरणाभावत्व कथं अभ्यासे जकार इत्याक्षेप: अंतरंगे द्वित्वे कर्त्तव्ये वहिरङ्गस्य हस्वादेरसिद्धात्वादम्यास हकारस्य होज इति जकार: इति परिहार: यत: विधिराष्टमिकों तत्वाद्विसर्गादि पुनर्विधि: वहिरंगातरंग एवान्य इतीष्टं शर्ववर्मण: ननु स्तु जकार: इत्याह कथं पुनरकार: इत्यत् व्याहार इत्येक इति।

एकेषां वामनादीनां मतमिदं नत्वस्माकं महाभाष्यादि विसंवादात् एवमाश्र्यवदीत्यपि शब्दो व्याख्येय: दुर्गगुप्तादीनां तु स्वमतेऽभ्यासे ङ्कार:। परमते जकार: इति व्याख्यातं तदसत्। डकारस्याप्रसिद्धे: यत्तु पूर्वत्रासिद्धीयम्द्विर्वचन इति दर्शित तत्पद द्वित्व विषयांदेशलेनापि पंजिकायां प्रदीपेत्नमताहव्या चान्द्रमतमुद्भवितं पूर्णमेति। औजिढत् आर्श्यित् आरिरत् तस्माद किं कदित्येव साधनीय: तथैव च नन्दीक्षीर स्वाम्पादिभि: धातुपारायणेपूदाहृतम्। कश्चित्त्व कृत्रिमडकारं मत्वत् आङ्किकदिति इच्छति तत्त: यत: नकारजातनुस्वार: पचमोझलि धातुषु सकारज: शकारश्चेषां वर्गस्तवर्गज: अङ्गयति अङ्गापयति पद संख्या स्थानमेकत्वादिति तेनक्तृ निष्ठक्रियाविशेषे लक्ष्यते। यत: क्रियैव वाच्या धातूनां कर्तृव्यापारलक्षणां स्वैकनिष्ट क्रियार्थत्वधात्वर्थे स्वकियात्मसु।

*प्राध्यापक:*

*श्री मां संस्कृतमहाविद्यालय: ज्वालामुखी हि. प्र.*

ISSN : 2581-6446

# व्याकरणशास्त्रस्य प्रयोजनानि

कुशाग्रः

यदि वयं कस्यापि शास्त्रस्य अध्ययनं कुर्मः प्रारम्भे एव मनसि प्रश्नः समुदेति यत् किमर्थम् अस्य शास्त्रस्य अध्ययनं कुर्मः ? अस्य प्रयोजनं किमस्ति ? यतोहि वाक्यमस्त्येकम्-प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते, तर्हि यदि मन्दः अपि प्रयोजनेन बिना कार्ये युक्तः न भवति तदा सामान्यो जनः कथं प्रयोजनं विना किमपि कार्यं करोति। अत्र व्याकरणशास्त्राध्ययनस्य प्रयोजनस्य व्याख्यानं क्रियते। समाधानं महाभाष्यकारेण एकस्मिन्नेव वाक्ये व्याकरणशास्त्रस्य प्रयोजनानि कथितानि। भाष्यकारः गदति-

रक्षोहागमलघ्वसन्देहाः प्रयोजनम्, अर्थात् वेदपुरुषस्य मुख्याङ्ग-व्याकरणस्य इमानि पञ्चप्रयोजनानि सन्ति। तानि प्रयोजनानि-रक्षा, उहः, आगमः, लघु, असन्देहश्च। पञ्चसु प्रयोजनेसु प्रथमप्रयोजनं वर्तते रक्षा। साम्प्रतं जिज्ञासा समुदेति यत् कस्य रक्षार्थं व्याकरणमध्येतव्यम् ? भाष्यवचनमस्ति-रक्षार्थं वेदानामध्येयं व्याकरणम् अर्थात् वेदानां रक्षार्थं व्याकरणस्याध्ययनं करणीयम्। जिज्ञासा जायते यत् व्याकरणाध्ययनेन कथं वेदानां रक्षा भवति ? भाष्यकारः वदति-लोपागमवर्णविकारज्ञो हि सम्यग्वेदान् परिपालयिष्यति। अर्थात् यः लोपं जानाति आगमं जानाति वर्णविकारान् जानाति सः लोपागमवर्णविकारज्ञो हि सम्यक् रुपेण वेदानामध्ययनं कर्तुं शक्नोति। यथा लोके पुत्रशब्दस्य प्रथमाबहुवचने पुत्राः इति रुपं भवति परञ्च वेदे तु तस्मिन्नेव स्थाने पुत्रासः इति रुपं भवति। यदि अवैयाकरणः वेदाध्येता स्यात्तदा सः वक्तुं शक्नोति यत् वेदे त्रुटिः विद्यते। वस्तुतः वेदे त्रुटिः नास्ति। यः वैयाकरणः स्यात् सः जानाति यत् वेदे तु 'बहुलं छन्दसि' इति सूत्रेण बहुलतया असुकागमः वर्तते , तेन पुत्रासः रुपमिदं भवति। भाष्यकारेण लोपागमयोरुदाहरणं दत्तम्-अदुह्र इति। लोकेदुहि धातोः लुङ्लकार-प्रथमपुरुषबहुवचने अदुहत इति रुपं भवति। अत्र तकारस्य लोपः एवञ्च रुट् इत्यस्यागमः भवति। अत एव अदुह्र लोपागमयोरुदाहरणम् अस्ति। वर्णविकारयोरुदाहरणं दत्तम्-उद्ग्राभम् इति। लोके उद्ग्राहम् रुपं प्रसिद्धमस्ति परञ्च वेदे हस्य भत्वं भवति उद्ग्राभम् इति रुपं भवति। इदं ज्ञानं व्याकरणादेव सम्भवति। अतः प्रथमप्रयोजनं दत्तं भाष्यकारेण रक्षा यः सम्यक् रुपेण लोपागमवर्णवि-कारान् जानाति सः एव वेदस्य सम्यगध्ययनं कृत्वा वेदस्य रक्षां कर्तु शक्नोति।

द्वितीयं प्रयोजनमाह-ऊहः अर्थात् परिवर्तनम्। कस्य परिवर्तनमिति चेत् विभक्तेः,वचनस्य, लिङ्गस्य च परिवर्तनम्। वस्तुतः भाष्यकारः कथयति यत् न सर्वैर्लिङ्गैर्न च सर्वाभिः विभक्तिभिः वेदे मन्त्रा निगदिताः। अर्थात् वेदेषु सर्वेषु लिङ्गेषु सर्वासु च विभक्तिषु मन्त्राः उक्ताः न सन्ति। यथा वेदे अग्नये स्वाहा तु लभ्यते परञ्च हनुमते स्वाहा न लभ्यते तदा तस्य विभक्तिविपरिणामं कर्तव्यं तत्तु वैयाकरणः एव कर्तुं शक्नोति। तर्हि कुत्र अग्नये स्वाहा इति चेत् । मीमांसा वाक्यमस्त्येकम्। 'अग्नये त्वां जुष्टं निर्वपामि' अस्याशयोऽस्ति हे अग्निदेव त्वदहं हव्यसामग्रीं ददामि। एकमीमांसावाक्यमस्ति-सौर्यं चरु निर्वपेत् ब्रह्मवर्चसकामः अस्मिन् वाक्ये चरुः निर्वपनीयमिति विहितमस्ति। परञ्च मन्त्रः न दत्तः वर्तते। तर्हि अग्निमन्त्रवदत्रापि सूर्यस्य मन्त्रः कर्तव्यः ? यदि अवैयाकरणः वेदाध्येता स्यात् सः ज्ञानं कर्तुं न सम्भवति यदत्र सूर्यये भवेदथवा सूर्याय इति। अत एव व्याकरणं पठनीयम्। तेनैव वेदाध्येता ऊहः कर्तुं शक्नोति। वैयाकरणः जानाति यदत्र सम्प्रदानाच्चतुर्थी भवति। सूर्याय त्वां जुष्टं निर्वपामि इति मन्त्रः भविष्यति। अतः वेदाध्ययने ऊहः आवश्यकम्। अवैयाकरणः ऊहः कर्तुं न शक्नोति। अतः व्याकरणशास्त्रस्याध्ययनम् आवश्यकम्।

तृतीयप्रयोजनमुक्तम्-आगमः। वस्तुतः आगमः व्याकरणाध्ययनस्य फलं नास्ति। अन्ये चत्वारि (रक्षा, उहः, लघु,असन्देहः) व्याकरणाध्ययनस्य फलानि सन्ति। परञ्च आगमः नास्ति फलम्। तर्हि किमस्ति ? उच्यते-आगमपरकः यः प्रयोजनशब्दः उक्तः सः तु प्रवर्तकपरकः वर्तते। अत्र प्रयोजनशब्दस्य व्याख्या एवं भविष्यति-प्रयुनक्ति इति प्रयोजनः अर्थात् यः अस्मान् कर्मकर्तुं प्रयोजयति। यथा भाष्यकारेण भणितम्-ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति, अर्थात् ब्राह्मणेन दृष्टं प्रयोजनम् अनुद्दिश्य षडङ्गसहितं वेदानाम् अध्ययनं कर्तव्यम्। तत्रापि षडङ्गेषु व्याकरणस्य प्रधानता विद्यते। यथोक्तम्-प्रधानं च षट्स्वङ्गेषु व्याकरणम्, प्रधाने च कृतो यत्नः फलवान् भवति। एवञ्च प्रधाने यः यत्नः कृतः विद्यते सः फलवान् भवति। अतः षडङ्गेषु व्याकरणस्य प्रधानता वर्तते अत एव व्याकरणस्याध्ययनं कर्तव्यम्।

चतुर्थं प्रयोजनं भणितम्-लघु। लघ्वर्थं चाध्येयं व्याकरणम्। बृहस्पतिना इन्द्राय एकंदिव्यवर्षसहस्त्रपर्यन्तं प्रतिपदपाठस्याध्ययनं कारितम्। तदापि सम्पूर्णसाधुशब्दसंग्रहस्य समाप्तिः न जाता। तर्हि सामान्यज्योतिषानुसारं 1 दिव्यवर्षम् = 365 वर्षाणि तर्हि 1000 दिव्यवर्षाणि म 365 =365000 वर्षाणि भवन्ति। वर्तमानसमये न तु बृहस्पतिसदृशः गुरुः अस्ति, न त्विन्द्रसदृशः शिष्यः। यदि स्यादपि तथापि मनुष्यस्य जीवनं तु अतीवाल्पं विद्यते। प्रायः शतं वर्षाणि एव मनुष्यस्य आयुः अस्ति। तर्हि यज्ज्ञानं 1000 दिव्यवर्षेष्वपि न जातम्। तज्ज्ञानं शतवर्षेषु कथं भविष्यति। तदोक्तम्-लाघवेन। तर्ह्यच्यते लाघवं

कथं भवति? लाघवविषये नागेशेनोक्तम्-प्रतिपदपाठापेक्षया प्रकृतिप्रत्ययादिविभागेन अन्वाख्यानरुपलाघवमिह विवक्षितम् । अतः प्रकृतिप्रत्ययं भिन्नं कृत्वा एव वर्तमानसमये शब्दज्ञानं सम्भवति। अतः लाघवन्तु व्याकरणमन्तरेण न सम्भवति। अतः व्याकरणमवश्यमेव अध्येतव्यम्।

पञ्चमं प्रयोजनमाह-असन्देहः अर्थात् सन्देहस्य प्रागभावः। तर्ह्युच्यते-याज्ञिकाः पठन्ति-स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत् इति मन्त्रोऽस्ति। अत्र अग्निवरुणोद्दिश्य स्थूलपृषती गोः पूजनं भवेत् इति आशयः अस्ति। परश्चात्र स्थूलपृषती पदस्यार्थकरणे सन्देहः भवति। यत् स्थूलपृषती इत्यस्यार्थः कः? वस्तुतः स्थूलपृषतीति पदं कर्मधारयसमासेऽपि भवति। पुनश्च बहुव्रीहीसमासेऽपि भवति। उभयोः अर्थः भिन्नः भवति। कर्मधारये-सति स्थूला चासौ पृषती इति विग्रहः भवति। अर्थः भवति गौरपि स्थूला, पुनश्च पृषती (बिन्दुः) अपि स्थूला भवेदिति। वस्तुतः कर्मधारयः तत्पुरुषस्यैव भेदः तर्हि प्रायः उत्तरपदस्य प्रधानता अत्र भविष्यति। उत्तरपदे तु पृषती वर्तते। तर्हि तया कथं गौः इत्यस्य ज्ञानं भविष्यति स्थूलपृषती तु कोऽपि जीवः भवितुं शक्नोति। तर्हि उच्यते अत्र पृषतीति पदस्य पृषतवतीत्यत्र लक्षणा कर्तव्या। लक्षणया एव पृषतवती गौः इत्यस्य ज्ञानं भवितुं शक्नोति। कर्मधारयसमासे 'समासस्य' इति सूत्रेण अन्तोदात्तः भविष्यति। बहुव्रीहिसमासे सति विग्रहः स्थूलानि पृषन्ति यस्याः इति भवति। बहुव्रीहिसमासे अन्यपदार्थस्य प्रधानता भवति। अर्थात् यस्याः पृषन्ति स्थूलानि सन्ति एतादृशी काचिदन्या इत्यर्थः प्राप्यते। अतः लक्षणायाः आवश्यकता अत्र नास्ति। अत्र 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' अनेन पूर्वपदार्थस्य प्रकृतिस्वरः भविष्यति। तर्हि अत्र तु सन्देहः (भ्रमम्) भविष्यति। यदत्र (स्थूलपृषतीत्यत्र) कः समासः? तर्हि कथं ज्ञानमिदं यत् कः समासः अत्र गृहीतः इति चेत् यदा वैयाकरणज्ञाः वैदिकाः स्वरचालनं (हस्तचालनम्) करिष्यन्ति तदा स्वरज्ञानेन ज्ञातुं शक्यते यदत्र कः समासः गृहीतः। स्वरज्ञानेन सन्देहस्य अभावः भविष्यति। यदि ते (याज्ञिकाः) स्थूल इत्यत्र लकारे प्रकृतिस्वरम् उच्चरति तदा ज्ञानं भविष्यति यदत्र स्थूलानि पृषन्ति यस्याः सा अपेक्षितम्। इति ज्ञानं यदत्र कः स्वरः किं तस्य प्रयोजनमिति तु व्याकरणात् ऋते न सम्भवति अतः अवश्यमेव व्याकरणम् अध्येतव्यम्।

## पादटिप्पणी

1. व्याकरणमहाभाष्यं पस्पशाह्निकम्
2. व्याकरणमहाभाष्यं पस्पशाह्निकम्
3. व्याकरणमहाभाष्यं पस्पशाह्निकम्
4. व्याकरणमहाभाष्यं पस्पशाह्निकम्
5. व्याकरणमहाभाष्यं पस्पशाह्निकम्
6. व्याकरणमहाभाष्यं पस्पशाह्निकम्
7. महाभाष्यप्रदीपटीकायाम्
8. व्याकरणमहाभाष्यं पस्पशाह्निक।

*व्याकरणछात्रः*
*केन्द्रियसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः, बलाहरः*



ISSN : 2581-6446

# शक्तितत्त्वसमीक्षा

डॉ. अरविन्दकुमारपाण्डेयः

**परिचयः-**

शक्तिशब्दः बहुषु अर्थेषु प्रयुक्तो भवति लोके शास्त्रे च। शब्दार्थयोः सम्बन्धरूपेणापि स्वीकृतो वर्तते शक्तिशब्दोऽयम्। शब्दार्थयोः सम्बन्धरूपे प्रसिद्धे शक्तिस्वरूपविषये दर्शनेषु महान् विवादो दृश्यते। नैयायिकाः मीमांसकाः वैयाकरणाः, आलङ्कारिकादयः सर्वे विषयेऽस्मिन् महान्तं विचारम् अकार्षुः। प्रायः प्रतिशास्त्रं शक्तिस्वरूपं पृथक् पृथक् एव दृष्टिपथम् अवतरति। यथा नैयायिकाः 'ईश्वरेच्छा शक्तिः' इति प्रतिपादयन्ति, मीमांसकाः 'वाच्यवाचकभावः' इति शक्तित्वेन आमनन्ति। वैयाकरणाः नव्याः अपि इत्थमेव वदन्ति। प्राचीनाश्च वैयाकरणाः बोधजनकतारूपां शक्तिं प्रतिपादयन्ति। यथा शक्तिस्वरूपविषये मतभेदः दृश्यते तथैव शक्तिभेदविषयेऽपि दार्शनिकेषु मतभेदः एव प्राप्यते। प्रकृते निबन्धे मञ्जूषादिग्रन्थेषु प्रदर्शितं शक्तिस्वरूपं प्रदर्श्य विमृश्य च समीक्षा करिष्यते। ततः शक्तिभेदविषये विद्यमानानां विविधशास्त्रमतानाम् आलोचनपुरस्सरं नागेशभट्टदिशा शक्तिभेदाः प्रतिपाद्यन्ते।

**शक्तिस्वरूपम्-**

नागेशः स्वतन्त्रतया स्वदार्शनिकसिद्धान्तप्रतिपादनाय मञ्जूषां निर्ममे। वैयाकरणसिद्धान्तमञ्जूषा, वैयाकरणसिद्धान्तलघुमञ्जूषा, वैयाकरणसिद्धान्तपरमलघुमञ्जूषा चेति तिस्रः मञ्जूषाः वर्तन्ते। मञ्जूषाग्रन्थेषु सर्वादौ शक्तिस्वरूपं पश्यामः। शक्तिस्वरूपविषये नागेशभट्टः सर्वादौ वैयाकरणसिद्धान्तमञ्जूषायां बभाण-

''किञ्च ज्ञानस्य शक्तित्वे बोधकत्वविशेषप्रकारकज्ञानत्वेन हेतुत्वं वाच्यम्, तदपेक्षया बोधकत्वज्ञानत्वेन हेतुत्वे लाघवात्। लौकिकानां गवादिपदेभ्यस्तादृशज्ञानसङ्ग्रहाभावेऽपि अर्थशाब्दधीजनकत्वग्रहानन्तरमेव बोधाच्च तद्विषयकबोधजनकत्वमेव शक्तिः''। वैयाकरणसिद्धान्तमञ्जूषायामेव नागेशः शक्तिलक्षणयोः भेदं प्रतिपादयाञ्चकार-''यस्य पदार्थस्य स्वविषयकबोधजनकत्वज्ञानाद् बोधस्तदर्थनिरूपितबोधकत्वं शक्तिः। यस्य पदार्थस्य स्वसम्बन्धिबोधजनकत्वज्ञानाद् बोधः, तत्पदार्थनिरूपिततादृशबोधकत्वं लक्षणा'' इति।

वैयाकरणसिद्धान्तलघुमञ्जूषायाम्-''तस्मात् पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया। तद्ग्राहकं च इतरेतराध्यासमूलकं तादात्म्यम्। तच्च संकेतः इति।'' इति निगदितम्।

परमलघुमञ्जूषायाम्-''तस्मात्पदपदार्थयोः सम्बन्धान्तरमेव शक्तिः, वाच्यवाचकभावापरपर्याया। तद्ग्राहकञ्चेतरेतराध्यासमूलकं तादात्म्यम्, तदेव सम्बन्धः। उभयनिरूपिततादात्म्यवानुभय इत्यर्थपदयोर्व्यवहारात्'' इति प्रतिपादितम्।

महाभाष्यव्याख्यायां नागेशभट्टः तादात्म्यस्य शक्तित्वं स्वीचकार। ''अथ गौरित्यत्र कः शब्दः ?'' इति भाष्यव्याख्यानावसरे नागेशः प्रोवाच-''पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने अयं गौरयं वर्णः शुक्ल इत्युत्तरस्थले सन्निहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतेरिति तात्पर्यम्। शब्दार्थयोस्तादात्म्यमेव शक्तिः''। एवमेव वृद्धिरादैच् इति सूत्रस्यापि उद्योते-''तादात्म्यमेव च शब्दार्थयोः शक्तिः'' इति जगाद।

इत्थम् अवलोकनेन इदमागच्छति यद् श्रीनागेशभट्टः स्वकीयेषु विविधेषु ग्रन्थेषु भिन्नं भिन्नं शक्तिस्वरूपम् अङ्गीकरोति। शक्तित्वेन इमे पदार्थाः पुरतः समायान्ति-

1. बोधजनकत्वम्।
2. तादात्म्यम्
3. वाच्यवाचकभावः।

**बोधजनकत्वम्-**

नागेशभट्टेन वैयाकरणसिद्धान्तमञ्जूषायाम् इदं शक्तिस्वरूपं स्वीकृतम्। इदमेव शक्तिस्वरूपं श्रीमद्भट्टोजिदीक्षितेन कौण्डभट्टेन च स्वीकृतं वर्तते। अस्य खण्डनमपि नागेशः स्वयमेव वैयाकरणसिद्धान्तलघुमञ्जूषायां कुरुते।

**तादात्म्यम्-**

तादात्म्यं शक्तिरिति नागेशः उद्योतव्याख्यायां प्रतिपादितवान्। तस्य शक्तिग्राहकत्वं सङ्केतत्वञ्च वैयाकरणसिद्धान्तमञ्जूषायां निरूपयामास। अत्र तादात्म्यस्य सम्बन्धत्वमपि निराकुरुते नागेशभट्टः। परमलघुमञ्जूषायां नागेशेन तादात्म्यस्य सम्बन्धत्वं स्वीकृतम्। तादात्म्यशब्दस्य त्रिविधा व्युत्पत्तिः क्रियते। तथाहि -

1. तस्य आत्मा इव आत्मा यस्य स तदात्मा। तदात्मनः भावः-तादात्म्यम्।
2. स आत्मा यस्य तदात्मा, तदात्मनः भावः तादात्म्यम्
3. तस्य आत्मा तदात्मा, तस्य भावः तादात्म्यम्।

तादात्म्यमिदं न्यायादिशास्त्रस्वीकृताद् तादात्म्याद् भिन्नमस्ति। न्यायशास्त्रे तु ''अभेदस्तादात्म्यम्'' इति प्रथितं वर्तते। नागोजिभट्टः परिभाषयतीत्थं तादात्म्यम्-''तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम्''।

**वाच्यवाचकभावः-**

नागेशभट्टैः वैयाकरणसिद्धान्तलघुमञ्जूषायाम् एवञ्च परमलघुमञ्जूषायां ''वाच्यवाचकभावः'' इति शक्तिस्वरूपं निगद्यते। वाच्यवाचकभावपदस्य विवरणं द्विधा वर्तते।

1. वाच्यश्च वाचकश्च इति वाच्यवाचकौ। वाच्यवाचकयोः भावः वाच्यवाचकभावः। अत्र वाच्यतानिरूपिता वाचकता अथवा वाचकतानिरूपिता वाच्यता एवं रूपेण विवरणं नास्ति अपितु अयम् अखण्डोपाधिर्वर्तते। इत्थं व्याख्या बहुभिः व्याख्याकृद्भिः कृता वर्तते।

2. वैयाकरणसिद्धान्तलघुमञ्जूषायाः सरलाव्याख्याकाराः श्रीरामप्रसादत्रिपाठिनः एवञ्च बृहच्छब्देन्दुशेखरस्य सम्पादकाः श्रीसीतारामशास्त्रिणश्च वाच्यवाचकभावशब्दस्य व्याख्यानमित्थं कुर्वन्ति –'कृत्तद्धितसमासैः सम्बन्धाभिधानं भावप्रत्ययेन' इति सिद्धान्ताद् भावार्थबोधकेन त्वतलादिप्रत्ययेन, भावरूपार्थबोधकेन भावशब्देन च सम्बन्धरूपोऽर्थोऽभिधीयते इति भावशब्दोऽपि सम्बन्धवाचकः। एवञ्च वाच्यवाचकभाव इत्यस्य वाच्यस्य वाचकस्य च सम्बन्ध इत्येवार्थो, न तु वाच्यवाचकभावरूपः सम्बन्ध इत्यर्थः। अतश्च नागेशमते 'वाच्यवाचकयोः यः खलु सम्बन्धः स एव शक्तिः' इति।

**समीक्षा-**

अत्र बोधजननसामर्थ्यम्, तादात्म्यम्, वाच्यवाचकभावः इति त्रयः पदार्थाः शक्तित्वेन समागताः सन्ति। नागेशेन स्वकीयेषु विविधेषु ग्रन्थेषु एतत् त्रयमपि शक्तित्वेन प्रतिपादितम्। एतेन प्रतीयते यद् नागेशभट्टस्य शक्तिविषये नैर्भयन्नास्ति। तादात्म्यविषयेऽपि नागेशभट्टस्य मतं स्पष्टन्नास्ति। यतोहि नागेशः वैयाकरणसिद्धान्तमञ्जूषायां तादात्म्यस्य चर्चाम् एव न करोति, लघुमञ्जूषायां तादात्म्यस्य सङ्केत निरूप्य तस्य सम्बन्धं निराचकार। परन्तु यदा वयं परमलघुमञ्जूषां पर्यालोचयामस्तदा तत्र तादात्म्यस्य सम्बन्धत्वं प्रतिपादितं दृश्यते। अतएव इममेव निष्कर्षमुपलभामहे यत् तादात्म्यविषयेऽपि नागेशस्य नैर्भयन्नास्ति। वास्तविकी स्थितिस्त्वियं पदमात्रनिष्ठा प्राचीनवैयाकरण-सम्मता बोधजनकतारूपा शक्तिः नैयायिकाभिमतेन संकेतेन विनियम्यते, श्रीनागेशभट्टाभिमतेन वाच्यवाचकभावरूपसम्बन्धेन निश्चीयते।

**शक्तिभेदाः -**

शक्तिभेदस्य चर्चा नागेशात् प्राग् व्याकरणे न प्राप्यते। नागेशभट्टः शब्दार्थयोः वाच्यवाचकभावाख्यं सम्बन्धं शक्तिं मनुते। अस्याः शक्तेः भेदत्रयं स्वीचकार नागेशः। तथा चोक्तं परमलघुमञ्जूषायाम्-''सा च शक्तिस्त्रिधा, रूढ़िर्योगो योगरूढिश्च''। वैयाकरणसिद्धान्तलघुमञ्जूषायाम् एव वैयाकरणसिद्धान्तमञ्जूषायामपि तथैव प्रतिपादयति नागेशः। परमलघुमञ्जूषायामेव समासादिवृत्त्यर्थनिर्णये शब्दानां चतुर्विधत्वमपि प्रतिपादितम्। नागेशादनन्तरम् भूषणसारस्य दर्पणटीकाकृदपि नागेशोक्तान् भेदानङ्गीचकार। पण्डितराजजगन्नाथोऽपि इमान् भेदान् नागेशात् पूर्वमेव प्रतिपादितवान्। न्यायसिद्धान्तमुक्तावल्यां शक्तं पदम्-तच्चतुर्विधम् इति प्रतिपादयता शक्तेश्चातुर्विध्यं सूचितम्। तथैव जगदीशतर्कालङ्कारेणापि तर्कामृते पदानां चातुर्विध्यं स्वीकृतम्। गागाभट्टोऽपि पदानां चातुर्विध्यमेव स्वीकृतवान्।

**रूढिः-**

रूढिः शक्तिः तत्रैव भवति यत्र व्याकरणशास्त्रकल्पितप्रकृतिप्रत्यार्थानां भानं न भवति अपितु ततः भिन्नः समुदायस्यैव अर्थबोधो भवति। अतः अस्याः स्वरूपं ''शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपितशक्ती रूढिः'' इति प्रत्यपादि नागेशेन। यथा मणिनूपुरादौ रूढिः शक्तिर्वर्तते।

**योगः-**

''शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः'' इति लक्षणं प्रतिपादितवन्तः श्रीनागेशभट्टाः योगशक्तेः। यथा पाचकादौ योगशक्तिर्वर्तते। अत्र व्याकरणशास्त्रकल्पितस्य पच्-धात्वर्थस्य ण्वुल्-प्रत्ययार्थस्य च भानं पाचके भवति। तथा च पाककर्ता इति बोधः।

**योगरूढिः-**

योगेन सहिता रूढिः योगरूढिः। अस्याः ''शास्त्रकल्पितावयवार्थान्वितविशेष्यभूतार्थनिरूपिता शक्तिर्योगरूढिः'' इति स्वरूपं प्रतिपादयति नागेशः। यथा पङ्कजपदे पङ्कजनिकर्तृपद्ममिति बोधात् योगरूढिः शक्तिर्विद्यते। रूढिज्ञानं प्रतिबन्धकं तत्रैव भवति यत्र पङ्कजनिकर्तृत्वं प्रकारो भवेत् किन्तु पद्मं विशेष्यं न स्यादिति नायंरूढिः योगार्थमपहरतीति न्यायस्य विषयः। नैयायिकाः ''यत्र तु रूढ्यर्थस्य बाधः प्रतिसन्धीयते तत्र लक्षणया कुमुदादेर्बोधः'' इति भणन्ति। परन्तु पद्मेऽनुपपत्तिप्रतिसन्धानं सम्बन्धप्रतिसन्धानं च विना न लक्षणावसरः इति नागेशाभिप्रायो वर्तते। 'भूमौ पङ्कजमुत्पन्नम्' इत्यत्र तात्पर्यवशात् केवलरूढ्यर्थस्य बोधो भवति। 'कह्लारकैरवमुखेष्वपि पङ्कजेषु' इत्यादौ तात्पर्यवशात् केवलयोगार्थस्य च बोधो जायते। एतत्तु 'आर्हादगोपुच्छ-सङ्ख्यापरिमाणाट्ठक्' इतिसूत्रे भाष्ये प्रतिपादितं विद्यते। नागेशभट्टः यथा शक्तिभेदविषये परमलघुमञ्जूषायां प्रतिपादयाञ्चकार तथैव वैयाकरणसिद्धान्तलघुमञ्जूषायामपि। सन्दर्भेऽस्मिन् द्वयोः ग्रन्थयोः मतभेदो न दृश्यते। नागेशेन वैयाकरणसिद्धान्तलघुमञ्जूषायां प्रोक्तम्-''स्पष्टं चेदम् आर्हादिति सूत्रे भाष्ये'' इति। तत्र स्पष्टम् इति प्रतीकमादाय लघुमञ्जूषायाः कलाटीकाकृतः प्रवदन्ति इत्थम्-

''तत्र हि परिमाणशब्दस्य सर्वतो माने प्रस्थादौ योगरूढ इत्युक्त्वा तदस्य परिमाणं सङ्ख्यायाः संज्ञेति सूत्रे संज्ञापरिमाणयोर्विशेष्यविशेषण-भावानुपपत्तिमाशङ्क्य वचनादियती विवक्षा भविष्यतीत्युक्तम्। रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यत इत्यर्थ इति''। साम्प्रतं स्पष्टप्रतिपत्तये तत्रत्यं भाष्यं प्रदर्शयामः। तथाहि तत्र भाष्यकृतोक्तम्-

''यदप्युच्यते तदस्य परिमाणं सङ्ख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति विशेषणं न प्रकल्पत इत्याहायं परिमाणं या सङ्ख्येति न चास्ति सङ्ख्यापरिमाणं तत्र वचनादियती विवक्षा भविष्यति''। अत्र प्रदीपकारः-इयती विवक्षेति। रूढिपरित्यागेन परिच्छेदकमात्रमाश्रयिष्यत इत्यर्थः इति।

**अत्रेदं बोध्यम्-**

सङ्ख्याया: संज्ञासंघसूत्राध्ययनेषु ( 5.1.58) इति सूत्रे परिमाणस्य सङ्ख्याविशेषणत्वं स्वीकृतं वर्तते, यतोहि सूत्रेऽस्मिन् ( तदस्य परिमाणम्-5.1.57 ) इति सूत्रात् परिमाणपदमनुवर्तते। परन्तु सङ्ख्या कुत्रचिदपि मापविशेषं न बोधयतीति कृत्वा भगवन्तो भाष्यकारा: अत्र परिमाणपदस्य मापविशेषस्य रूढ्यर्थस्य त्यागं कृत्वा योगरूढार्थस्य स्वीकारं कृतवन्त:। यदि केवलमत्र परिमाणपदस्य रूढ्यर्थ: मापविशेष एव स्वीक्रियते तदा सूत्रमिदमसङ्गतं भविष्यति। अत: पाणिनिवचन-सामर्थ्यात् भाष्यकार: परिमाणपदं योगरूढार्थकं मत्त्वा तस्य अत्र केवलं परिच्छेदकतामात्र योगार्थं गृहीतवन्त:। अनेन निष्कर्षोऽयं समायात: यद् परिमाणपदं योगरूढं वर्तते। परन्तु 'न चास्ति संख्या परिमाणम्' इति भाष्यात् परिच्छेदकतामात्रम् योगार्थ एव बुद्ध्यते।

अश्वगन्धादिपदमोषधिविशेषे रूढम् अस्ति। अश्वगन्धापदात् कदाचित् अश्वगन्धानिष्ठसमुदायनिरूपितशक्त्या ओषधिबोध:। कदाचित्तु 'अश्वस्य गन्धोऽस्यामि'ति व्युत्पत्त्या अश्वसम्बन्धिगन्धवत्तया वाजि-शालाबोधे यौगिकं भवति। यत् पदं यौगिकमपि भवति रूढमपि तत्तु यौगिकञ्च तद्रूढमिति व्युत्पत्त्या यौगिकरूढमित्युच्यते। एवं मण्डपपदविषयेऽपि बोध्यम्। मण्डपपदं गृहविशेषे रूढं वर्तते, मण्डपानकर्तरि यौगिकम् अस्ति। अर्थभेदादपि शब्दैक्यमिति मतेन यौगिकरूढस्य अन्तर्भावसम्भवात् चतुर्थो भेद: नैव कर्त्तव्य:। अत: नैयायिकादीनां विभाग अनुचित एवेति बोध्यम्।

अत्रेदं रहस्यं विज्ञेयं भवति यद् योगरूढि: शक्तिर्भवति वैयाकरणानां मते, परन्तु यौगिकरूढि: शक्तिर्न भवति। यतोहि इयं योगस्य रूढेश्च सम्मिलितस्वरूपैव वर्तते। अत्र यौगिकार्थस्य पृथक् प्रतीति: योगार्थस्य च पृथक् प्रतीतिर्भवत:। योगरूढिस्थले एकस्मिन्नेव योगस्यापि प्रतीति: रूढस्यापि प्रतीति: भवति। यद्यपि अखण्डवाक्यसिद्धान्ते विशिष्टार्थे केवलरूढिशक्तिरेव भवति तथापि व्यावहारिकदृष्ट्या एते विभागा अपि भवन्ति। तथा चोक्तम्-''अखण्डा एव हि शब्दास्तत्र समासेषु पदानां कृत्तद्धिततिङन्तेषु च प्रकृतिप्रत्ययानां विभाग: काल्पनिक एवेति कुत्रास्ति योगशक्ति: विशिष्टस्य विशिष्टार्थे रूढेरेवाभ्युपगमात्''।

**समीक्षा-**

नागेशभट्टेन शक्ते: त्रैविध्यं परमलघुमञ्जूषायां प्रतिपादितं वर्तते। एतत्तु समीचीनमेव वर्तते। नैयायिकादय: शक्तेश्चातुर्विध्यं स्वीकुर्वन्ति। वस्तुत: नैयायिकानां मतम् अत्यन्तं असङ्गतं वर्तते। यतोहि ते वदन्ति ''शक्तं पदं तच्चतुर्विधम्''। परन्तु 'पाचक' इति यौगिकोदाहरणे यच्छक्तं पदं 'पच्' 'अक्' इति विद्यते तद् यौगिकं नास्ति। यद्यपि समुदाय: यौगिक: वर्तते परन्तु समुदाय: शक्त: नास्ति। अतश्च तार्किकमतं समीचीनन्नास्ति। एवमेव गौरिति रूढ्युदाहरणमप्यसमीचीनमेव। यतो हि तत्रापि गच्छतीति गौरितिव्युत्पत्ति: कर्तुं शक्यते। अत: केवलरूढत्वा-भावात् गौरित्युदाहरणमसङ्गतमेव। तार्किकै: मीमांसकैश्च स्वीकृत: यौगिकरूढ: इति भेदोऽपि न युक्तिसङ्गत:, यतो हि सकृदुच्चरित: शब्द: सकृदर्थं प्रत्याययतीति न्यायात् मण्डपपदेन प्रतीतिद्वयं भविष्यति। तत्र गृहविशेषस्यमण्डपानकर्तुश्च। अत: भिन्नार्थप्रतीतिद्वयात् अतिरिक्तभेदस्वीकारे मानाभावाच्च भेदोऽयमसङ्गत एव। नैयायिकमते भ्रमरार्थबोधकं द्विरेफपदं लाक्षणिकम्। यथोक्तं न्यायसिद्धान्तमुक्तावल्याम्-

''यत्र तु शक्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणे-त्युच्यते। यथा-द्विरेफादिपदात् रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते इति तत्र लक्षितलक्षणा''।

परञ्च मतमिदं नास्ति समीचीनं ''मधुव्रतो मधुकरो मधुलिणमधु-पालिन:। द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय:'' इत्यमरकोशवचनात् कोशस्य शक्तिग्रहसाधनत्वाच्च। अत: कोशे द्विरेफ इतिपदस्य भ्रमरपर्यायेषु पाठादत्र लक्षणा न भवितुमर्हति। एवमेव अनेके दोषा: तार्किकमते सम्भवन्ति। प्रपञ्चितश्चैतत् मौनिश्रीकृष्णभट्टेनापि।

## सन्दर्भग्रन्थसूची

1. अमरकोश: (नामलिङ्गानुशासनम्), श्रीमदमरसिंहविरचित:-म. म. भट्टोजिदीक्षितात्मजविद्वद्वरश्रीभानुदीक्षितकृतया रामाश्रमीव्याख्यया विभूषित:, चौखम्भाकृष्णदास-अकादमी, वाराणसी, 2002
2. काव्यप्रकाश:, मम्मटाचार्यप्रणीत:, झकलीकरोपनाम्ना रामभट्टात्मजेन भट्टवामनाचार्येण विरचितया बालबोधिन्याख्यटीकया युत:, परिमलपब्लिकेशन्स, देहली, तृतीयं संस्करणम्, 2012
3. तर्कामृतम्, श्रीजगदीशतर्कालङ्कार:, चषकव्याख्यया चषकतात्पर्यटीका-व्याख्यया च समलङ्कृतम्, नागपब्लिशर्स, 2003
4. न्यायसिद्धान्तमुक्तावली-श्रीविश्वनाथपञ्चाननविरचिता, पण्डितश्रीकृष्णवल्ल-भाचार्यकृतया किरणावलीव्याख्यया विभूषिता, चौखम्भासंस्कृतसंस्थानम्, वाराणसी, पुनर्मुद्रितसंस्करणम्, 2014
5. परमलघुमञ्जूषा-श्रीनागेशभट्टविरचित:, कालिकाप्रसादशुक्लविरचितया ज्योत्स्नाख्यटीकया समलङ्कृता, महाराजसयाजिरावविश्वविद्यालय:, बडौदा, 1961
6. रसगङ्गाधर: (द्वितीयो भाग:), पण्डितराजजगन्नाथविरचित:, श्रीनागेशभट्ट-कृतया गुरुमर्मप्रकाशव्याख्यया समलङ्कृत:, सम्पूर्णानन्दसंस्कृत-विश्वविद्यालय:, वाराणसी, 2000
7. वृत्तिदीपिका, मौनिश्रीकृष्णभट्टविरचिता, श्रीगोपीनाथकविराजसंस्कृता, विद्याविलासप्रकाशनम्, वाराणसी, 1930
8. वैयाकरणभूषणसार:, कौण्डभट्टकृत:, हरिवल्लभदर्पण-हरिशास्त्रिकृत-काशिका-गुरुप्रसादशास्त्रिकृतटिप्पणीभि: समुद्भासित:, नन्दकिशोरशास्त्रि-सीतारामशास्त्रि-बालशास्त्रिभि: संस्कृत:, चौखम्भासुरभारतीप्रकाशनम्, वाराणसी, 2009
9. वैयाकरणसिद्धान्तलघुमञ्जूषा-महामहोपाध्यायनागेशभट्टविरचिता, श्रीमद्दुर्बलाचार्यविरचितकुञ्जिका-श्रीमद्बालम्भट्टविरचितकलाटीकाद्वयेन संवलिता, पण्डितमाधवशास्त्रिभण्डारी-पण्डितनरसिंहशास्त्रिपेण्डसे-

प्रभृतिभिः सम्पादिता भागद्वयात्मिका, राष्ट्रियसंस्कृतसंस्थानम्, पुनर्मुद्रित-संस्करणम्, 2012

10. स्फोटचन्द्रिका, मौनिश्रीकृष्णभट्टविरचिता, श्रीगोपालशास्त्रिनेनेसंस्कृता, 2014

## पादटिप्पणी

1. वैयाकरणसिद्धान्तमञ्जूषा ( कपिलदेवशास्त्रिसंस्करणम् ) पृष्ठम् - 09
2. वैयाकरणसिद्धान्तमञ्जूषा ( कपिलदेवशास्त्रिसंस्करणम् ) पृष्ठम् - 17
3. वैयाकरणसिद्धान्तलघुमञ्जूषा पृष्ठसङ्ख्या- 23
4. परमलघुमञ्जूषा
5. महाभाष्यम्, ( तत्त्वालोकसहितम् ) उद्योतव्याख्या-पृष्ठम्-07
6. महाभाष्यम्, ( तत्त्वालोकसहितम् ) उद्योतव्याख्या-पृष्ठम्-128
7. यद्यपि कौण्डभट्टमते शक्तिस्वरूपं किमिति विषये विदुषां विवादो वर्तते, परन्तु प्रायः विद्वाँस एवमेव वदन्ति। भूषणसारतत्त्वप्रकाशिकायाम् आचार्यश्रीरामकृष्णमाचार्याः कथयन्ति यद्-कौण्डभट्टः कार्यकारणभावरूपां शक्तिमभ्युपगच्छति। द्रष्टव्यम्-भूषणसारतत्त्वप्रकाशिका पृष्ठम्-228
8. ''किञ्च,इच्छायाः जनकत्वस्य वाउभयवृत्तित्वाभावः, इच्छाविषयबोधीय-विषयतायामिच्छाश्रयनियामकत्वाभावात्।'' सम्बन्धो हि सम्बन्धिभ्यां भिन्न उभयाश्रितः'' इति ''द्विष्ठः सम्बन्धः'' इति च ''विशिष्टबुद्धिनियामकः'' इति चाभियुक्तव्यवहारात्। नहि तत्र 'विषयः इच्छावान्' इत्यादिव्यव-हारोऽस्ति।'जनकता शक्तिः' इति पक्षे बोधजनकतायाः पदेऽर्थे च सत्त्वेऽपि तयोः परस्परं सम्बन्धस्य दुरुपपादत्वात्, ज्ञाने विषयस्य कर्तुत्श्च कारणत्वेऽपि तयोः परस्परं विशिष्टबुद्ध्यदर्शनात्, अर्थपदयोः सम्बन्धस्य दुरुपपादत्वात्।'' वैयाकरणसिद्धान्तमञ्जूषा, पृष्ठम्-17
9. वैयाकरणसिद्धान्तलघुमञ्जूषा, पृष्ठम् 40 (कलाकुञ्जिकासहिता)
10. द्रष्टव्यम्-वैयाकरणसिद्धान्तमञ्जूषा सरलाव्याख्या शक्तिनिरूपणे।
11. द्रष्टव्यम्-श्रीविद्यावार्ता पृष्ठम् -05
12. वैयाकरणभूषणसारः , पृष्ठसङ्ख्या- 389
13. सिद्धान्तोऽयं श्रीसीतारामशास्त्रिणः वर्तते। द्रष्टव्यम्-श्रीविद्यावार्ता पृष्ठम्-05
14. परमलघुमञ्जूषा कालिकाप्रसादशुक्लसंस्करणम्, पृष्ठम् - 49
15. वैयाकरणसिद्धान्तलघुमञ्जूषा प्रथमो भागः पृष्ठम्-105, वैयाकरणसिद्धान्त-मञ्जूषा पृष्ठम् 14 ( कपिलदेवशास्त्रिसंस्करणम् )
16. अत एव चतुर्विधः शब्दः।यथा- रूढः, योगरूढः, यौगिकः, यौगिकरूढश्चेति। अवयवार्थमनपेक्ष्य समुदायशक्तिमात्रेणार्थबोधकत्वं रूढत्वम्- रथन्तरमि-त्यादौ। अवयवार्थसंवलितसमुदाय-शक्त्याऽर्थबोधकत्वं योगरूढत्वम्-पङ्कजमित्यत्र। अवयवशक्त्यैवार्थबोधकत्वं यौगिकत्वम्-पाचिका पाठिकेत्यादौ। अवयवशक्त्या समुदायशक्त्या चार्थबोधकत्वं यौगिकरूढत्वम्। मण्डपानकर्तृपरोऽपि गृहविशेषपरोऽपि मण्डपशब्द उदाहरणमिति विवेकः (परमलघुमञ्जूषा कालिकाप्रसादशुक्लसंस्करणम्, पृष्ठम् - 215)
17. वैयाकरणभूषणसारः टीकाद्वयोपेता दर्पणटीका पृष्ठम् - 417
18. सेयं त्रिविधा भवति-समुदायशक्तिः, केवलावयवशक्तिः, समुदायावयवशक्तिसंकरश्च। रसगङ्गाधरः द्वितीयम् आननम् पृष्ठम् - 63
19. शक्तं पदं तच्चतुर्विधम्, क्वचिद्यौगिकम्, क्वचिद्रूढम्, क्वचिद्योगरूढम्, क्वचिद्यौगिकरूढम्। न्यायसिद्धान्तमुक्तावली शब्दखण्डः पृष्ठम् - 315
20. शक्तं पदं तच्चतुर्विधम्-यौगिकम्, रूढम्, योगरूढम्, यौगिकरूढञ्च। (तर्कामृतम् पृष्ठम्- 418)
21. भाट्टचिन्तामणिः तर्कपादः पृष्ठम् 59 तच्च पदं चतुर्विधम्। रूढं यौगिकं, योगरूढं यौगिकरूढञ्च।
22. परमलघुमञ्जूषा कालिकाप्रसादशुक्लसंस्करणम्, पृष्ठम् - 49
23. परमलघुमञ्जूषा कालिकाप्रसादशुक्लसंस्करणम्, पृष्ठम् - 49
24. परमलघुमञ्जूषा कालिकाप्रसादशुक्लसंस्करणम्, पृष्ठम्-50, न्यायसिद्धान्तमुक्तावल्याः किरणावलीटीकाकाराः इममेव लक्षणं यथावत् गृह्णन्ति। ( पृ. 315 )
25. न्यायसिद्धान्तमुक्तावली पृष्ठम् 317- 318
26. कह्लारकैरवमुखेष्वपि पङ्कजेषु, लोकेश यत्कमलमेव तथा प्रसिद्धम्। मन्येऽभिजातभवदास्यतुलास्य नेति मर्मादिप्रकाशनमिदं विधिनैव क्लृप्तम्।। ( काव्यप्रकाशविवरणे सम्पूर्णोऽयं श्लोकः )
27. वैयाकरणसिद्धान्तलघुमञ्जूषा कलाव्याख्या पृष्ठम् 108
28. महाभाष्यम् - 5.1.19, कीलहार्नसंस्करणम्, 344.6-7
29. महाभाष्यप्रदीपः-25
30. तथा च भाष्यम्-''सङ्ख्या बाह्या तु सर्वतः। भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन। ( 5.1.19 )
31. नागेशः वैयाकरणसिद्धान्तलघुमञ्जूषायाम् अत्र स्थले लक्षणां स्वीकरोति। तथाहि-''यत्र'मण्डप' पदादिभ्यो मण्डपानकर्त्रादेः रूढ्यर्थमण्डपादिगुण-वत्त्वेन बोधः, तत्र प्रथमप्रतीतिरूढिविषयमुख्यार्थत्यागेन योगाद् रूढिपूर्वकलक्षणाया बलवत्त्वेन लक्षणयैव बोधः। ( वै.सि.म. पृ. 89 )
32. मौनिकृष्णेनाऽपि सन्दर्भेऽस्मिन् इत्थमेव प्रोक्तम्। तथाहि-यौगिकरूढ इति तार्किकभेदोऽपि न युक्तः। सकृदुच्चरितः शब्दः सकृदर्थं प्रत्याययतीति न्यायान्मण्डपपदं गृहविशेषे रूढं भिन्नं, मण्डपानकर्तरि भिन्नमिति अतिरिक्तभेदस्वीकारे मानाभावात्। ( स्फोटचन्द्रिका पृष्ठम् -02 )
33. रसगङ्गाधरः पृष्ठम् - 65
34. न्यायसिद्धान्तमुक्तावली पृष्ठम् 324-325
35. अमरकोषः-द्वितीयं काण्डम्, 5/29, पृष्ठम् - 198
36. स्फोटचन्द्रिका पृष्ठम् 02, वृत्तिदीपिका, पृष्ठम् - 09

*संस्कृतविद्याधर्मविज्ञानसंकायः*
*काशीहिन्दूविश्वविद्यालयः, वाराणसी*



ISSN : 2581-6446

# सुधाकरव्याख्योक्तदिशा कर्तुरीप्सिततमं कर्म इति सूत्रविचारः

सरयूप्रफुल्लचन्द्र

करोति क्रियां जनयतीति कारकम्। तच्च कारकं षड्विधं कर्तृ-कर्म-करण-सम्प्रदान-अपादान-अधिकरणभेदेन। तत्र कर्मकारकं प्रधानतः कर्तुरीप्सिततमं कर्म इति सूत्रेण निरुच्यते। तत्सूत्रमिह मौनिकुलोत्पन्नश्रीविनायकगुरोरन्तेवासिना सङ्केपल्लयुपाह्वेन कृष्णशास्त्रिणा विरचितां सुधाकरनाम्नीं व्याख्यामाधृत्य विचार्यते।

**सूत्रस्थपदानां विवेचनम्-**

कर्तुः ईप्सिततमं कर्म इति त्रिपदं सूत्रम्। तत्र कर्ता कः इति चेत्- ''कर्तृशब्दः प्रधानधात्वर्थाश्रयपरः'', फलं व्यापारश्च धातोः अर्थः; धातुना वाच्यौ भवतः। तत्र फलं व्यापारजन्यमित्यतः व्यापारः प्रधानः धात्वर्थो भवति। तादृशस्य व्यापारस्य आश्रयः कर्ता इत्युच्यते। स चेह कर्तृशब्देन विवक्षितः। कर्तुरिति कर्तृशब्दस्य षष्ठ्येकवचनम्। षष्ठी चेह वर्तमानार्थकेन क्तेन योगे षष्ठी स्यादित्यर्थकेन ''क्तस्य च वर्तमाने'' इति सूत्रेण। अतिशयेन आप्तुम् इष्टः ईप्सिततमः। आप्-व्याप्तौ इति धातोः ''धातोः कर्मणः समानकर्तृकादिच्छायां वा'' इति सूत्रेण इच्छार्थे सनि 'सन्यङो'रिति द्वित्वे अभ्यासकार्ये ईप्स इत्यस्मात् कर्मणि क्तप्रत्यये ईप्सितशब्दः, एषामयमतिशयेन इष्टः इत्यर्थे अतिशायने तमबिष्ठनौ इति सूत्रेण तमपि ईप्सिततम् इति शब्दः सम्पद्यते।

**सूत्रार्थसिद्धिप्रकारः-**

आप्-धातुः सम्बन्धं गमयति। यथा-कर्तृपदार्थस्य कर्तृवाचक-पदार्थस्य प्रत्ययार्थेऽभेदेनान्वयः भवति। प्रत्ययार्थश्च वृत्तितासम्बन्धे-नाप्तिप्रकारकेच्छायामन्वेति। आप्तिप्रकारकेच्छायाः निरूपितत्वसम्बन्धेन क्तप्रत्ययार्थैकदेशविषयत्वेऽन्वयो भवति। तस्य चाश्रये कर्मवाचक-पदार्थेऽन्वयः। तथा च प्रकृतधात्वर्थप्रधानव्यापाराश्रयाश्रयिका या फलसम्बन्धप्रकारकेच्छा तन्निरूपितविषयत्ववान् कर्मसंज्ञक इत्यर्थः फलति। तत्र केनाप्तुमिच्छतीति करणाकांक्षायां कर्तृपदार्थप्रकारीभूतेन व्यापारेणेत्यर्थाल्लभ्यते। व्यापारेण च स्वजन्यफलद्वारक एव सम्बन्ध इत्युक्तार्थलाभः। आचार्येण दीक्षितेन अयमेव सूत्रार्थः सङ्गृह्य इत्थमुक्तः- कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यादिति। कर्मणि द्वितीयेति कर्मवाचकात् द्वितीयाविभक्तिविधानं हि कर्मसंज्ञायाः फलम्।

यथोदाहरणम्-चैत्रः ग्रामं गच्छति। चैत्रः इतीह कर्तृवाचकं पदम्। गच्छति इति क्रिया। संयोगानुकूलः व्यापारः प्रधानः धात्वर्थः। संयोगश्च फलम्। प्रकृतः धात्वर्थः संयोगानुकूलः व्यापारः। यश्च प्रधानः धातोरर्थः। संयोगानुकूलः व्यापारः चलनादिरूपः चैत्रे अस्तीति चैत्रः व्यापारस्याश्रयः सम्पन्नः। संयोगानुकूलव्यापाराश्रयः चैत्रः संयोगरूपस्य फलस्य सम्बन्धः ग्रामे इच्छति। एवञ्च संयोगानुकूलव्यापाराश्रयश्चैत्रस्तदाश्रयिकासंयोग-सम्बन्धप्रकारकेच्छानिरूपितविषयत्वं ग्रामे अस्तीति ग्रामः कर्म भवति।

सूत्रमिदं प्रथमाध्यायस्य चतुर्थे पादेऽस्ति। यत्र चास्ति आकडारा-देकासंज्ञेति एकसंज्ञाधिकारः। तस्मात् कारकसंज्ञाकर्मसंज्ञयोः कयाचि-देकया संज्ञया भाव्यमिति चेन्न। उभयोः संज्ञयोस्समावेशः कारकं सत् कर्मसंज्ञं स्यादित्यन्वयः।

**दलकृत्यविचारः-**

कर्तृग्रहणं किमर्थम्?

ईप्सिततमं कर्म इत्येतावदेव सूत्रमस्तु। कर्तृग्रहणस्य कावश्यकता? कर्तृग्रहणाभावे करणस्याकाङ्क्षापि न स्यात् येन क्रियया ईप्सिततमः इत्यर्थः न लभ्येत इति चेन्न। कारके इत्यधिकारे इदं सूत्रमस्ति। कारकं च क्रियाजनकमित्यतः कारकमित्यस्येह सम्बन्धादेव क्रिययेति गम्यते। अतः क्रियालाभार्थं कर्तृग्रहणमनपेक्षितमिति पुनः कर्तृग्रहणं किमर्थमिति प्रश्नस्तदवस्थः। यदि कर्तृग्रहणं न क्रियेत तर्हि कर्तृभिन्नेपि कारके या क्रिया तया ईप्सितस्य कर्मसंज्ञातिप्रसङ्गः अतः कर्तृग्रहणं कर्तव्यमिति चेन्न। कृतेपि हि कर्तृग्रहणे नायमतिप्रसङ्गः वार्यते। तत्र च कारणं प्रधानधात्वर्थाश्रयः कर्ता इह सूत्रे विवक्षितः। सर्वाणि कारकाणि काञ्चन क्रियां निर्वर्तयन्त्येव। अतस्तेषां तत्तद्धातूपात्तप्रधानक्रियाश्रयत्वमस्त्येव इति कृतेपि कर्तृग्रहणे कारकान्तरनिरासः न भवति। अतः किं कर्तृग्रहणेनेति प्रश्नस्याशयः। माषेषु अश्वं बध्नाति इति वाक्ये माषस्य कर्मसंज्ञा माभूदित्येतदर्थं सूत्रे कर्तृग्रहणम्। माषेषु प्रसक्तमश्वं माषनाशो माभूदित्यन्यत्र बध्नातीति वाक्यस्यार्थः। यदि कर्तृग्रहणं न क्रियते तर्हि केनाप्तुमिति करणस्याकाङ्क्षायां कारकाधिकारेण व्यापारेण इति लभ्यते, व्यापारप्रयोज्यफलाश्रयं कर्म इत्यर्थः स्यात्। स च व्यापारः कर्तृनिष्ठः कर्मनिष्ठः च गृह्येत। कर्मनिष्ठस्य व्यापारस्यापि आश्रयः कर्मसंज्ञकः स्यात्। यथात्र वाक्ये माषेषु अश्वं बध्नातीत्यत्र अश्वः कर्म। तस्मिन् प्रसक्तिरूपा क्रिया अस्ति। तस्याः क्रियायाः जन्यं फलं संयोगः, तदाश्रयः माषाः इति माषपदार्थवाचकस्य माषस्य कर्मसंज्ञातिप्रसङ्गः। कर्तृग्रहणस्य कृतत्वात् फलांशे कर्तृवृत्तिव्यापारवाचकधातूपात्तत्वं लभ्यते। एवञ्च प्रकृते कर्तृवृत्तिः व्यापारः देशविशेषस्थित्यनुकूलरूपः तद्वाचकः बन्ध्-धातुः तेन संयोगरूपं फलं नोपोद्यते इति माषाणां कर्मसंज्ञा वारिता भवति। कर्तृग्रहणाभावे तु माषपदार्थस्य या अधिकरणसंज्ञा प्राप्नोति तां कर्मसंज्ञा परत्वात् बाध्येत।

यदा माषक्षेत्रे एव अश्वः माषभक्षणं कुर्यादिति बध्यते तदापि न माषाणां कर्मसंज्ञा भवति। कर्तृवृत्तिर्यः व्यापारः देशविशेषस्थित्यनु-

ISSN : 2581-6446

कूलरूप: तद्वाचक: धातु: बन्ध्-धातु: तेन माषवृत्ति: संयोग: नोपात्त इति न माषस्य कर्मसंज्ञा। कर्तृग्रहणाभावे तु अश्वरूपे कारके देशविशेष-स्थितिरूपक्रियया संयोगरूपं फलं माषेषु जायत इत्यत: माषाणां कर्मत्वं स्यात्।

**ईप्सिततमग्रहणं किमर्थम् ?**

ईप्सितशब्दोऽभीष्टार्थक:। रूढमेवादाय कर्मण एवेष्टा न कर्तुरिति यथाश्रुतलापनन्त्वयुक्तम्। ईप्सितशब्द: क्रियाशब्द एव न त्वभीष्टपरो रूढ क्रियाशब्द एव भाष्यसम्मत:। नन्वीप्सितशब्दोभीष्टपर एवास्तु यथा शुक्लतरोपि शुक्लो भवति एवमीप्सिततमोपीप्सितो भवत्येवेत्यनर्थकं तमब्ग्रहणमिति चेत् उच्यते पयसा ओदनं भुङ्क्ते इति। अत्र ह्योदनसंस्कारकत्वेन पयोप्यभीष्टमेवेति परत्वात्करणसंज्ञां बाधित्वा स्यात्कर्मसंज्ञा। करणसंज्ञायास्तु कुठारेण छिनत्तीत्यादावकाश:। कृते तु ईप्सिततमग्रहणे न दोष:। केवलपय:पानेन तस्य तुष्ट्यभावेन तत्संस्कृतौदनस्यैवाभीष्टतमत्वात्। यदा तु पय एव ईप्सिततमं विवक्ष्यते तदा भवत्येव कर्मता पयो भुङ्क्ते इत्यादिस्थले। ग्रन्थकर्तुराशय:-

वस्तुत: कर्तुरुद्देश्यं कर्मेत्येव सूत्रमस्तु मास्त्वीप्सिततमग्रहणमित्येवाव यवद्वारा समुदायविषयक: प्रश्न:। यदा कृतभोजनोपि पयोलाभेनौदन-भोजने प्रवर्तते तदा तत्क्रियाया: पय उद्देश्यकत्वात्स्यादेव तत्र दोष:। कृते तु तस्मिन् तस्य क्रियाशब्दत्वात्पयसस्साधकतमत्वेनैव विवक्षणा-त्फलाश्रयत्वेनाविवक्षणान्न दोष इत्येव युक्तमाभाति। अत एव भाष्ये तमब्ग्रहणस्याग्नेर्माणवकं वारयतीत्येतदेव व्यावर्त्तयिमुक्तम्। तदभावे हि कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वरूपेप्सितस्याग्निमाणवको-भयवृत्तित्वेनोभयोरपिकर्मत्वप्राप्तौ वारणार्थानामितिसूत्रमेतदपवादस्स्या-दित्येवं च माणवकस्यापि कर्मत्वं न स्यात्। सति तु तस्मिन् कर्तृवृत्तिव्यापारवाचकधातूपात्तत्वे सति तद्वृत्तिव्यापारप्रयोज्यत्वरूप-विशेषणान्तरस्यापि फलांशे निवेशान्न दोष:। वारयतेश्च संयोगानुकूल-व्यापाराभावानुकूलो व्यापारोर्थ: तत्राग्निवृत्तिसंयोगरूपफलस्यैतद्धा-तूपात्तत्वेपि तद्व्यापारप्रयोज्यत्वाभावेन न तदाश्रयकर्मत्वप्राप्तिरिति तत्र चरितार्थापादानसंज्ञा माणवके अग्निवृत्तिसंयोगानुकूलव्यापाराभावरूप-फलाश्रये परत्वात्कर्मसंज्ञया बाध्यत इत्याशय:। अयं भाव:। तमबादय-स्स्वप्रकृतिप्रवृत्तिनिमित्तगतप्रकर्षद्योतका:। तत्रेप्सितशब्दप्रवृत्तिनिमित्त-भूतेच्छायां स्वत: प्रकर्षासम्भवात्स्वविषयसम्बद्धफलवृत्तिस्स गृह्यते। फले च निरुक्तरूप एव

यदि तु कर्तृग्रहणतमग्रहणान्यतरेणैवोक्तार्थस्साधयितुं शक्यत इत्युच्यते, तदान्यतरग्रहणं न कर्तव्यमित्युद्योतकार। निरुक्तपरिष्कारवाक्ये प्रयोज्यत्वनिवेशाद्विभागानुकूलव्यापारानुकूल-व्यापारार्थकदुहियोगे गां दोग्धि पय इत्यादौ पयस: कर्मत्वसिद्धिरिति बोध्यम्।

**कर्मग्रहणं किमर्थम् ?**

अधिशीङ्स्थासां कर्म इति पूर्वसूत्रात् कर्म इत्यनुवर्त्य इष्टार्थे साधयितुं शक्ये पुन: कर्मग्रहणं न करणीयमित्याशङ्का न कार्या। कर्मग्रहणाभावे अधिशीङ्स्थासां कर्म, अभिनिविशश्च इति सूत्रयोरनुवृत्त्या सम्बद्ध: आधार: इहाप्यनुवर्तेत। येन कर्तृद्वारा क्रियाया: आधारस्यैव कर्मसंज्ञा स्यात् यथा गेहं प्रविशति इत्यादौ। अत्र हि कर्तृवृत्तिव्यापार-जन्यसंयोगविशेषरूपफलाश्रये गेहे कर्तृद्वारा तद्वृत्तिक्रियाश्रयत्वमस्ति। हरिं भजतीत्यादिषु न कर्तृद्वारा क्रियाश्रयत्वमिति न कदापि हरिवाचकस्य कर्मसंज्ञा स्यात्। अत: सूत्रे कर्मग्रहणमपेक्षितंइत्येवं कर्तुरीप्सिततं कर्मेति सूत्रविचार:।

*शोधच्छात्रा*
*कर्णाटकसंस्कृतविश्वविद्यालय:, बेङ्गलूरु*



ISSN : 2581-6446

# वेदे वाक्स्वरूपविमर्शः

डॉ. धनेशकुमारपाण्डेयः

प्राणमयैः देवैः इयं प्रकाशमयी वाणी विसृष्टा। अस्माकं वेदवेदाङ्गादर्शनादय सर्वे वाण्या उपनिबद्धाः वर्तन्ते।

वेदादिषु ब्राह्मणादिषु श्रुतिषु इयं वाणी व्याप्ता वर्तते। इयमेव वाणी संवत्सररूपेण परिवतर्तितं भूत्वा प्राणरूपेण जीवधारिप्राणिनां प्राणशक्तेः सञ्चालनं करोति। इयमेव वाणी सम्वत्सरात्मकप्रज-पतिर्भूत्वा प्राणिनां सृष्टे आयुर्निधारणं च करोति। प्रत्यक्षवृत्त्यनुसारेण प्रजापतिरेव सम्वत्सरनाम्ना व्यवहृतो वर्तते। स एव प्रजापतिः शनैः शनैः नित्यप्राणधारिणां जीवनां प्राणायुं चोरयति। अस्योल्लेखः शतपथब्राह्मणग्रन्थे **विद्यते।**[1]

सर्वेषां जीवधारिप्राणीनाम् उत्पत्तिः सत्ता विपरिणामः परिवर्धनम् विनाशश्च एतेषां **षड्भावविकाराणां कारकः प्रजापतिरेव भवति।**[2] विषयोऽयं श्रुतिप्रसङ्गेषु नैकेषु स्थलेषु वर्णितो **विद्यते।**[3]

भारतीयासंस्कृतौ अमूल्यनिधयः चत्वारो वेदाः षड्वेदाङ्गाः दर्शनशास्त्राणि सन्ति। एतेषां ग्रन्थानां अध्ययनस्य परमं प्रयोजनं मोक्षो विद्यते। तस्यामोक्षस्य प्राप्तिः बिना धर्मज्ञानेन ब्रह्मज्ञानेन न सम्भवति। अतः एव ''सर्वारम्भास्तण्डुलप्रस्थमूलाः'' इति न्यायात् सर्वासां विद्यानां अध्ययनमननचिन्तनादिभिः ब्रह्मसम्बन्धिज्ञानकरणमेव चरमलक्ष्यं भवति। वेदेषु काण्डद्वयं पूर्वकाण्डम् उत्तरकाण्ड्ञ्च भवति पूर्वकाण्डे धर्मस्य निरुपणं तथा च उत्तरकाण्डे ब्रह्मनिरूपणं विद्यते। इदमेव काण्डद्वयं पूर्वमीमासा, उत्तरमीमांसा नाम्ना प्रसिद्धम्।

अस्य काण्डद्वयस्य अध्ययनं बिना समीचीनतया अध्ययनं मननं बिना धर्मब्रह्मणोः ज्ञानं खपुष्पसदृशं विद्यते। एतत्सर्वं मनसि निधाय महर्षिणा जैमिनिना पूर्वमीमांसायामुक्तं यथा-'' धर्मब्रह्मणीवेदैकवेद्ये'' अर्थात् धर्मस्य ब्रह्मणो ज्ञानं बिना वेदवेदाङ्गज्ञानात् न **सम्भवति।**[4]

अनुमानप्रमाणेनापि धर्मज्ञानं कर्तुं न शक्यते। प्रत्याक्षानुसारेण अनुमानप्रमाणस्य ज्ञानं न भवितुं शक्नोति अत एव श्लोकवार्तिके स्पष्टरूपेणोक्तं विद्यते अनुमानप्रमाणस्य लिङ्गादिरहितवस्तुषु गतिसामर्थ्यं न **विद्यते।**[5]

श्रुतिषु ब्रह्मणग्रन्थेषु निरूपितं विद्यते यत् वेदैरेव धर्मं ज्ञातुं शक्यते अस्माभिः। प्रत्यक्षादिभि**रनुमानैश्च न धर्मं ज्ञातुं शक्नुमः वयम्।**[6]

धर्मजिज्ञासायाः विषये स्मृतिषु वर्णितं विद्यते। धर्मजिज्ञासमानानां प्रमाणं **परमंश्रुतिः**[7] वेदो धर्ममूलम् वेदोऽखिलो **धर्ममूलम्।**[8]

ब्रह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च[9] अनया श्रुत्या वेदाध्ययनहेतुना ''स्वाध्यायोऽध्येतव्यः'' विधिना ज्ञानं कर्तव्यमिति उक्तं विद्यते। एवं ज्ञेयश्य इत्येनेनअवबोधविधेरावश्यकता प्रतिपादिता विद्यते। वेदाध्ययनस्य प्रकारद्वयं वर्तते यथा- अक्षरराशीनामानुपूर्विज्ञानं एवञ्चार्थावबोधश्च। अस्य विधिद्वयस्योल्लेखः आचार्यसायणेन कृतो वर्तते। ऋग्वेदस्य भाष्यभूमिकायाम्-

''अक्षरग्रहणपर्यवसायि अर्थग्रहणपर्यवसायि अध्ययनं चेति''। तत्तद्वेदशाखानां प्रतिशाख्यसहितानां ग्रन्थानाम् अध्ययनेन ऐहिकमामुष्मिकमुभयोः लोकयोः प्राप्तिर्भवति। आगमेषु स्पष्टं वर्णितं विद्यते-एकः शब्दः सम्यक् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुक् भवति।

प्रत्यक्षप्रमाणादिभिः धर्मज्ञानं कर्तुं न शक्यते अस्माभिः। धर्मस्य कोऽपि आकारप्रकारो न भवति येन धर्मस्य प्रत्यक्षं स्यात्। प्रत्यक्षप्रमाणेन विद्यामानां वस्तूनां ज्ञानं भवति।[10]

सम्यक् विचार्य अर्थावबोधपूर्वकं ये वेदाध्ययनं कुवन्ति ते ईप्सिततं फलं प्राप्नुवन्ति। उक्तं विद्यते-निरुक्ते-

**योर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविद्यूतपाप्मा।**
**मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह।।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वतोऽपराधात्।**[11]

स्वरदोषेण मन्त्रः यस्मिन् अर्थे प्रयुक्तो भवति तमर्थं न कथयति। एवञ्च तस्माद् विपरीतं अर्थम् उत्पादयति येन वाणी वज्ररूपं भूत्वा यजमानस्य अनिष्टमुत्पादयति। स्वरदोषेण ही इन्द्रशत्रोः वृत्रासुरस्य हननं जातम्। शतपथब्राह्मणे एकमाख्यानं प्राप्यते यत् त्वष्टा एकः असुरः आसीत् सः स्वपुत्रस्य विश्वरूपस्य हननं करिष्यति इति ज्ञात्वा स्वपुत्रस्य विश्वरूपस्य वृद्धिः स्यात् एतदर्थं अविचारिके कर्मणि ''इन्द्रशत्रुर्वर्धस्व इति मन्त्रं प्रयुक्तवान्। मन्त्रे अन्तोदात्तस्य स्थाने आद्युदात्तस्वरं प्रयुक्तवान् यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुब्रीहिः। अथ समासान्तोदात्तत्वं ततस्तत्पुरुषः इति।

व्याकरणशास्त्रस्य नियमः वर्तते। यदि तत्पुरुषसमासः ''समासस्य''[12] सूत्रेण अन्तोदात्तस्वरः भवति। यदि पूर्वपदे आद्युदा-त्तस्वरः भवति बहुब्रीहौ प्रकृत्या पूर्वपदम्''[13] इति पूर्वपदप्रकृतिस्वरो भवति।

ऋग्वेदभाष्यकारेण वेंकटमाधवेन स्वरानुक्रमणिकायां स्पष्टरूपेणोक्तं यथा-

**अन्धकारे दीपिकाभिर्गच्छन्न स्खलति क्वचित्।**
**एवं स्वरैः प्रणीतानां भवन्त्यर्थाः स्फुटा इति।।**[14]

येन प्रकारेण मनुष्याः दीपकेन सह मार्गे चलन्तः मार्गपतितो न भवन्ति, तद्वत् स्वरसहितेन मन्त्रेण सन्देहरहितः अर्थबोधः भवति। अत एव शब्देषु सूक्ष्मस्वरज्ञानाय स्वरशास्त्रस्य अध्ययनमपेक्षितं भवति।

स्वरस्य महत्त्वप्रतिपादनावसरे महर्षिकात्यायनेन भणितं सर्वप्रथमं वाक्यं प्रतिशाख्यग्रन्थे–''स्वरसंस्कारयोश्छन्दसि नियम:।।[15] अत एव स्वरविधानस्य वैदिकसाहित्ये महत्वपूर्णं स्थानं विद्यते।

निरुक्तकारेण यास्केनापि प्रतिपादितं यत् ''ऋचां त्व: पोषमास्ते''[16] ऋग्वेदादिषु चतुर्षु क्रमेण चतर्णामुदाहरणं विद्यते क्रमश: ऋग्वेद: सामवेद:, अथर्ववेद:, यजुवेदश्च इमे चत्वारो वेदा: वर्तन्ते।

होतृकर्म यजुवेदस्य महाऋत्विक्‌महोदयेन-प्रतिपादितं कर्म शास्त्रपाठ: इति कथ्यते।[17]

औद्‌गात्र-उद्‌गतामहोदयेन कृत: स्तोत्रपाठ: स्तोत्रमिति कथ्यते।[18]

ब्रह्मत्वम्-ब्रह्मामहोदय: कृताकृतेषु विधिषु त्रुट्या: संशोधनं करोति।

अध्वर्युमहाऋत्विकमहोदय: सम्पूर्णस्य यज्ञस्य सञ्चालनं करोति, यास्केन अध्वर्युशब्दस्य निर्वचनं कृतम्-''अध्वर्युरध्वरं युनक्ति, अध्वरस्य नेता, अध्वरं कामयते व।[19]

शुक्लयजुवेदीयप्रतिशाख्ये सप्तस्वरा भवन्तिषड्ज: ऋषभ: गान्धार:, मध्यम: पञ्चम: धैवत: निषाद: इमे सप्तस्वरा यजुर्वेदेन सम्बद्धा: वर्तन्ते।[20]

माध्यन्दिनसंहितायां त्रय: स्वरा: मुख्या: भवन्ति।

उदात्तानुदात्तस्वरिताश्च त्रय: स्वरा: इमे वर्तन्ते।

''उच्चैरुदात्त: मन्त्राणामुच्चारणे शरीरस्योदरभागस्य वायु: यदि उपरि गच्छति तदा तया गत्या य: स्वर: उच्चरित: भवति स: स्वर: उदात्तसंज्ञको भवति।

''नीचैरनुदात्त: उच्चारणे शरीरावयवानां वायु: नीचै: नाभिं प्रति यदा गच्छति, तया गत्या य: स्वर: उच्चरितो भवति स: स्वर: अनुदात्तसंज्ञको भवति।

''उभयवान्स्वरित:''-यस्मिन् स्वरे उत्तादस्वराणां आर्धभाग: भवति, एवं अनुदात्तस्य चार्धभाग: भवति। स: स्वर: स्वरितसज्ञको भवति।

त्रयाणां स्वराणां हस्तसञ्चालने हदयात् मुख-पर्यन्तप्रदेशे दशांगुपरिमिते स्थाने हस्तसञ्चालनं भवति नियमेन।

हृदयस्याग्रप्रदेशे स्वरसञ्चालने हस्तस्य स्थिति: स्यात् तदा अनुदात्तस्वरस्योच्चारणं भवति।

मुखस्याग्रे स्वरसञ्चालने हस्तस्यस्थिति: स्यात् तदा स्वरितस्वरस्योच्चारणं भवति। एवमेवं मन्त्राणां स्वरसञ्चालने ध्रुवप्रदेशे ध्रुवप्रदेशस्याग्रे हस्तस्य स्थिति स्यात् तदा उदात्तस्वरो भवति। याज्ञवल्क्यशिक्षायामुक्तं विद्यते यत् सामवेदे षड्जादय: सप्तस्वरा: भवन्ति। एषां स्वाराणामन्र्भाव उदात्तादिषु त्रिषु स्वरेषु भवति।

**''उच्चैर्निशादगान्धारौ नीचावृषभधैवतौ। शेषास्तु स्वरिता: ज्ञेया: षडजमध्यपञ्चमा:'**[21]

उदात्तस्वरे निषादगान्धारस्वरयो: अन्तभाव: भवति। अनुदात्तस्वरे ऋषभधैवतस्वरयो: अन्तर्भाव: विद्यते। स्वरितस्वरे षड्जमध्यमपञ्चमस्वराणामन्तर्भावो भवति।

याज्ञवल्लक्यशिक्षायां स्वरितस्वरस्य अष्टानां भेदानां चर्चा विद्यते।

अष्टौ स्वरान् प्रवक्ष्यामि तेषामेव तु लक्षणम्। जात्योऽभिनिहित: क्षैप्र: प्रश्लिष्टश्च तथा पर:।।

**तैरो व्यंजनसंज्ञश्च तथा तैरोविरामक: पादवृत्तौ भवेत्तद्वत् तथाभात्य इति स्वरा:।।**[22] ऐतेषां स्वराणां माध्यन्दिनसंहितायां परिगणना न विद्यते। यतो हि इमे स्वरा: मध्यन्दिनसंहिताया: विरोधिन: सन्ति। अत: एव उक्तं विद्यते

''मध्यन्दिन विरोधीस्यात्''[23]

शतपथब्राह्मणे स्वरद्वयं प्रयुक्तं विद्यते। एकम्[24] अनेन सूत्रेण यज्ञकर्मणि ''तान'' नामकैवस्वर: एव प्रयुक्तो विद्यते।

कात्यायनप्रतिज्ञापरिशिष्टे उक्तं विद्यते यत् शतपथब्राह्मणस्य उदात्तानुदात्तयो: द्वयो: स्वरयो: भाषिकस्वर: इति कथ्यते यथा-''ब्राह्मणे ''तूदात्तानुदात्तौ भाषिकस्वरौ''[25]

वर्णसमाम्नाय:-शुक्लयजुवेदस्य वाजसनेयीप्रतिशाख्ये अष्टमे ध्याये वर्णसमाम्नाय: उपदिष्ट: वर्तते।

| हस्वस्वर: | दीर्घस्वर: | प्लुतस्वर: | |
|---|---|---|---|
| अ | आ | आ3 | अकार: |
| इ | ई | ई3 | इकार: |
| उ | ऊ | ऊ3 | उकार: |
| ऋ | ॠ | ॠ3 | ऋ |
| लृ | ॡ | ॡ3 | |

**सन्ध्यक्षरा:**

1. ए ए3 ऐ ऐ3 ओ ओ3 औ औ3

अकाराद् आरभ्य लृकारपर्यन्तं पञ्चदशस्वरा भवन्ति। एकाराद् आरभ्य औकारपर्यन्तम् अष्टौसंध्यक्षराणि भवन्ति। त्रयोविंशति स्वरा: भवन्ति। 23 स्वरवर्णा: भवन्ति।

व्यंजनाक्षराणि

ककाराद् आरम्भ मकारंपर्यन्तं 25 पञ्चविंशति: स्पर्शवर्णा: भवन्ति।

अन्तस्थवर्णा:-य् व् र् ल् इमे चत्वारो वर्णा:।

ऊष्मवर्णा:-श् ष् स् ह-चत्वारो वर्णाश्च भवन्ति।

1. जिह्वामूलीय:-क, एकवर्ण:, (2) उपघ्मानीय: प. एकवर्ण: (3) अं-अनुस्वार:, एक:। (4) विसर्ग अ: (5) नासिक्यवर्ण:-हूँ।

चत्वारो यमा: भवन्ति-कुँ सुँ गुँ घुँ (4) अयोगवाहावर्णा:-नवसंख्याका: भवन्ति।

ISSN : 2581-6446

स्पर्शाः-25

अन्तस्थाः-4

उष्मवर्णाः-4

अयोगवाहाः-9 सर्वान् व्यञ्जनवर्णान् संयोज्य द्विचत्वारिंशत संख्या काः 42 भवन्ति।

स्वरर्णा भवन्ति। त्रयोविंशतिः।

त्रयोविंशतिरुच्यन्ते स्वराः शब्दार्थचिन्तकैः।

द्विचत्वारिंशद् व्यञ्जनान्येतावान्वर्णसंग्रहः।।[26]

## पादटिप्पणी

1. श. ब्रा.-14/6/2/8
2. निरु. 1/1
3. श. ब्रा. 11/1/6/12
4. जै. सू. 1/2
5. सामर्थ्यं नानुमानादेर्लिंगादिरहिते क्वचित्।
6. नेन्द्रियाणि नानुमानं वेदा एवैनं धर्मं वेदयन्ति तस्मादाहुर्वेदाः
7. मनु. 2/13
8. गौ. ध. सू. 1/1
9. महाभाष्यम् 1 आह्निकम्
10. प्रत्यक्षनिमित्तं विद्यमानोपलम्भत्वात्-जै. सू. 1/1/4
11. शतपथब्राह्मणग्रन्थः
12. पाणिनीयसूत्रपाठः 6/1/223
13. पाणिनीयसूत्रपाठः 6/2/1
14. स्वरानुक्रमणिकायाम्
15. वा. प्र. 1/1
16. ऋ. सं. 10/71/11
17. अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणामिद्यानंस्तोत्वम्।
18. वा. प्रा. 1/127
19. निरुक्तम्।
20. या. शि. स्वरप्रकरणम्
21. श. शि. स्वरसंहिताविधिः
22. श. शि. स्वरसहिताविधिः श्लोक सं. 861
23. द्वौ वा. प्रा. 1/129
24. वा. प्रा. 1/130
25. का. प्र. परि.
26. वाजसनेयीप्रतिशाख्ये अष्टमेऽध्याये

*सहायकाचार्यः कर्मकाण्ड एवं वेदः*

*हिमाचलादर्शसंस्कृतस्नातकोत्तरमहाविद्यालयः*

*जागला, रोहड़ू शिमला, हिमाचलप्रदेशः*



ISSN : 2581-6446

# कारके नागेशोक्तिः

डॉ. नीरजशर्मा

नागेशास्तु क्रियानिष्पादकत्वं कारकत्वमिति स्वीकुर्वन्ति। तत्र निष्पादयत्युत्पादयतीति व्युत्पत्या निष्पादको जनकः। एवञ्च क्रियाजनकत्वमेव कारकत्वं लभ्यते। उक्तञ्च ''कारकत्वं क्रियाजनकत्वम्'' भाष्ये करोति क्रियां निर्वर्तयतीति व्युत्पत्तिप्रदर्शनात्। तत्र जनकता च कारणतारूपा। कारणता च अन्यथासिद्धिशून्यत्वे सति कार्यनियतपूर्ववृत्तित्वरूपा। देवदत्तस्य तण्डुलं पचति, ब्राह्मणस्य पुत्रं पन्थानं पृच्छति, इत्यादौ देवदत्तब्राह्मणादीनामन्यथासिद्धत्वेन क्रियाजनकत्वाभावान्न कारकत्वम्। यथा घटं प्रति कुलालपितुः न कारणत्वं तद्वदत्रापि बोध्यम्। अत एवोक्तम् शेखरे ''ब्राह्मणस्य पुत्रं पन्थानं पृच्छती''त्यादौ ब्राह्मणस्य न कारकत्वम्। पुत्रेणाऽन्यथासिद्ध्या तत्त्वाभावात्। सम्प्रदानस्य त्वनुमतिप्रकाशनद्वारा क्रियाजनकत्वात् कारकत्वं सम्भवत्येव। यथा कश्चन विप्रः यजमानं प्रेरयति स्वकुण्डलीस्थदोष-निवारणाय गोदानं कुरु। तेन प्रेरितो यजमानः विप्राय गां ददाति, अत्रानुमत्या दानक्रिया भवति अतः क्रिया जनकत्वात् सम्प्रदानस्यापि कारकत्वं सम्पन्नम्। किञ्च अनुमतिसत्वे दानस्य प्रवृत्तिः, अनुमत्यभावे दानप्रवृत्यभावः, इत्यन्वयव्यतिरेकाभ्यां सम्प्रदानस्य दानप्रवृत्तिं प्रत्यनुमतिप्रकाशनद्वारा कारकत्वमस्त्येवेति न कारकत्वहानिः।

अत्राशङ्कते यत्र सम्प्रदानं नास्ति तत्र सम्प्रदानानुपस्थितिदशायामनु-मतिप्रकाशनाभावे सम्प्रदानस्य क्रियाजनकत्वाभावेन कारकत्वानापत्तिः, अनुमतिप्रकाशनद्वारैव तस्य क्रियां प्रति कारणत्वादिति चेदुच्यते- तादृश सम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकेन विषयविधया तस्यापि दानजनकत्वात्। अत एवोक्तम् शेखरे - असन्निहितसम्प्रदानस्यापि दातृबुद्धिस्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालकत्वेनैव जनकत्वम्। एवमुद्योतेऽपि प्रतिपादितं - संप्रदानादीनामपि स्वज्ञानद्वारा जनकत्वं बोध्यम्। आदिना अपादानाधिकरणयोः संग्रहः। ''कटे आस्ते'' इत्यत्र स्थितिं प्रति कटस्य कारणत्वात् क्रियाजनकत्वेन कारकत्वं निष्प्रत्यूहम्। ''वृक्षात् पर्णं पतति'' इत्यत्र च अवधिभवनव्यापारं प्रति वृक्षस्य कारणत्वात् कारकत्वमक्षुण्णमेव। तस्मात् क्रियाजनकत्वमेव कारकत्वमिति नागेशतात्पर्यम्। कारकणाञ्च क्रियायामेवान्वयः, क्रियायाः तज्जनककारकस्य च परस्परं साकांक्षत्वात्। अत एवोक्तम् शेखरे - अत एवैषां क्रियायामेवान्वयः। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियायाः जनकाकाङ्क्षया च तत्रैवान्वस्यौचित्यात्। न च क्रियाशब्दस्य प्रधानक्रियायां मुख्यत्वेन कर्मादिकारकाणां प्रधानक्रियाऽनिर्वर्तकत्वात् कथं तेषां कारकत्वमिति चेदुच्यते- सर्वेषां कारकाणां स्व-स्व-अवान्तरक्रियाद्वारा प्रधानक्रियानिष्पादकत्वात् कारकत्वोपपत्तेः।

न च घटङ्करोतीत्यादौ घटादेः क्रियाजनकत्वन्नोपपद्यते, तेषां क्रियो-त्तरकालिकत्वादिति वाच्यम्? तद्विषयकस्मृतेः क्रियापूर्वकालिकत्वेन विषयेऽपि तत्क्रियापूर्वकालिकत्वव्यवहारात्, सत्कार्यवादसिद्धान्ताद्वा। न चैवमपि सर्वेषां कारकाणां स्व-स्वक्रियाजनने स्वातन्त्र्यात् कर्मणः कर्तृसंज्ञाऽपि प्राप्नोतीति वाच्यम्। तथैव च कारकशब्दस्य कर्तरि ण्वुलप्रत्ययेन कर्तृपर्यायत्वात् 'कारकं करणम्' इत्यादि विरुद्धम्, कारकं कर्ता इति च पुनरुक्तं स्यादिति चेदुच्यते-

'स्वतन्त्रः कर्ता' इति सूत्रे 'कारके' इत्यस्य सम्बन्धेन स्वातन्त्र्ये उक्तरूपात्मके लब्धे पुनःस्वतन्त्रपदोपादानं यस्य स्वातन्त्र्यमेव न तु पारतन्त्र्यमपि तद्व्यावृत्यर्थमित्याशयात्।

**निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।**
**व्यापारभेदापेक्षायां करणत्वादित्वसम्भवः।।**

अयमाशयः सर्वेषां स्वस्वव्यापारद्वारा स्वातन्त्र्येणैव क्रियाजनक-त्वात्कर्तृत्वेन कारकत्वम्। ततः कः केन किं पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम्। तत्र सामान्यपूर्वकत्वाद्विशेषस्य कारकत्वमनुवृत्तमिति नोक्तदोषद्वयम्। कर्मत्वाद्यवस्थायां कर्तृसंज्ञा तु न, कारकत्वादेव स्वातन्त्र्ये लब्धे पुनस्तग्रहणं यस्य स्वातन्त्र्यमेव न तु पारतन्त्र्ययुक्तस्वातन्त्र्यं तस्य कर्तृत्वार्थमित्युक्तत्वात्। कारकसंज्ञा तु वस्तुसतःस्वातन्त्र्यस्य स्थितिमात्रेण कर्मादीनां विधानसामथ्यात् प्रवर्तते।

अत्रेदं बोध्यम्, यस्य यस्य ज्ञानं क्रियापूर्वकालिकन्तेषां सर्वेषां कारकत्वमिति ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यत्र पुत्रज्ञानवत्कदाचिद् ब्राह्मणज्ञानस्यापि क्रियापूर्वकालिकत्वसम्भवादतिव्याप्तेः क्रियान्वयित्व-विवक्षापि प्रयोजिका। क्रिया च धात्वर्थप्रधानीभूतव्यापाररूपैव। कर्मणस्तत्क्रियाजनकत्वम्फलम्। अधिकरणस्य तु कर्तृकर्मद्वारा। यदि साक्षाज्जनकत्वमात्रं विवक्षितं स्यात्तदा ग्रामं गच्छति, ग्रामे गच्छतीति प्रयोगद्वैविध्यासङ्गतिः स्यात्। फलस्य क्रियात्वस्वीकारस्तु प्राचामनुरोधेन। धात्वर्थप्रधानव्यापारान्वयित्वं च न विशेषणतयैव किन्तु क्वचिद्विशेष्यतयापि। अत एव 'पाचकस्य स्थितिः' इत्यादौ स्थितिक्रियाम्प्रति विशेषणत्वेऽपि पाचकस्य पुरुषस्य ग्राममित्यादौ कर्तृकारके ण्वुल्प्रत्ययोपपत्तिः। एवं च क्रियान्वयित्वे कारकत्वे तेषां कर्तृसमवायेऽपि कर्मकारकमित्यादेरनुपपत्य-भावात्तत्र तदाशंकासमाधानपरभाष्यासङ्गतिस्तदर्थे कारकशब्दस्य साधुत्वानुपपत्तिश्चेत्यपि दूषणं बोध्यम्। एतेन क्रियान्वयित्वं कारकत्वं, न तज्जनकत्वं, सम्प्रदादीनां कारकत्त्वानापत्तेः। न च यागस्यापूर्ववृत्ति-त्वेऽप्यपूर्वस्य तत्त्वेन तद्द्वारा तत्त्वमात्रेण यागस्य करणतावत्तज्ज्ञानस्य पूर्ववृत्तित्वेन तस्य कारकत्वं सूपपन्नमिति वाच्यम्? ब्राह्मणसम्बन्धिपुत्रस्य क्रियाव्याप्यत्वेन पुत्रज्ञानस्येव ब्राह्मणज्ञानस्यापि पूर्वं सत्त्वात् जनकत्वांशं त्यक्त्वा क्रियान्वयित्वविवक्षायां क्षत्यभावाच्च। न चैवमपि ब्राह्मणस्य कर्मसंज्ञा दुर्वारा, पुत्रद्वारा तस्यापि क्रियान्वयित्वात्। न च साक्षात्तद-न्वयित्वेवेष्टं, कर्मकारकस्य फलद्वारा अधिकरणकारकस्य कर्तृकर्मद्वारा तदन्वयानुभवस्य सूत्रादिसम्मतस्य विना प्रमाणमपलापायोगात। ग्रामं गच्छति, ग्रामे गच्छतीति प्रयोगयोरुक्तप्रकारं विनोपपादनाऽभावाच्चेति

वाच्यम क्रियाया: कारकाक्षंया कारकाणां क्रियाकांक्षया च तत्र साक्षात् परम्परयां वाऽन्वयस्य क्लृप्तत्वेऽपि षष्ठ्यन्तस्थले तादृशकल्पने मानाभावात् फलस्यापि क्रियात्वाच्च। तत्र क्रियान्वयश्च प्रकारत्वेनैवेति नाग्रहः, किन्तु विशेष्यत्वेनापि। अत एव ' पाचकस्य देवदत्तस्य गृहं' देवदत्तेन पक्वस्य तण्डुलस्य समूहः ' इत्यादौ वा पाकक्रियानिरूपितं कर्तृत्वादिकं सङ्गच्छते। एतेन कारकाधिकारपठितसंज्ञावत्वं यस्य तस्य प्रधानीभूतव्यापारान्वयित्वात् कारकपदेन ग्रहणम् , न तु येन केन प्रकारेण क्रियान्वयिनामिति परास्तम्, प्रथमाया अपि कारकत्वापत्तेः। न चेष्टापत्तिः। 'सम्बोधनान्तं कृत्वोर्थाः कारकम्प्रथमो वतिः ' इत्यत्र सम्बोधनान्तस्य पृथग्ग्रहणं व्यर्थं स्यात, यतो हि तस्य प्रथमान्तत्वेन क्रियान्वयस्यैवोचितत्वात। तदुक्तं भूषणे - किञ्च फलांशोऽपि भावनायां विशेषणम्, कारकाण्यपि क्वचित्तथाभूतानि, इति 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात' इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्यन्वियन्ति। 'न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके' इति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्वियन्तीति मीमांसका अपि मन्वते । वाक्ये धात्वर्थव्यापारस्यैव प्रधानीभूतत्वात। कृत्वसुजर्थकप्रत्ययान्तानां कारकत्वापत्तिश्च। न चेष्टापत्तिः, 'द्विर्ध्यानकर्तारः ' इत्यर्थे ध्यायतेः क्विपि 'द्विर्धियौ' द्विर्धियः' इत्यादौ ब्राह्मणवद्धीरित्यादौ च कारकपूर्वत्वेन 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणापत्तिः इति तन्न, कारकशब्दस्य करोतीति कारकमिति व्युत्पत्तेर्भाष्यकृतैव दर्शनात। प्रथमान्तस्य च कारकत्वमिष्टमेव। ब्राह्मणवसिष्ठन्यायेन सम्बोधनान्तस्य कृतत्वात। कृत्वोर्थादीनां तदजनकत्वेन कारकत्त्वानापत्तेश्च।

तत्र वैयाकरणसिद्धान्तमञ्जूषायां नागेशः किमपि विशिष्टं प्रतिपादयति। तद्यथा- ''तत्र कारकत्वं क्रियान्वयित्वम्। अत एव 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्य न कारकत्वम्, क्रियान्वयित्वाभावात्। अन्यथा सुन्दरादिविशिष्टस्य पुत्रस्य क्रियाव्याप्यत्वेन सुन्दरादीनां कर्मकारकत्ववद् ब्राह्मणसम्बन्धिपुत्रस्य विशिष्टस्य क्रियाव्याप्यत्वेन तस्यापि तत्त्वं स्यात्। सुन्दरादीनां च 'अरुणाधिकरणन्यायेन' क्रियान्वयित्वम्, पुत्रद्वारा एवं च साक्षात्क्रिया-न्वय्यभिन्नतया क्रियान्वयित्वं कारकत्वम्, तदतिरिक्तसम्बन्धग्रहणे मानाभावातृ, भेदसम्बन्धस्य बहिरङ्गत्वाच्च।

यत्तु, क्रियान्वितप्रत्ययार्थान्वयित्वं कारकत्वमिति, तन्न, पक्व इत्यादौ प्रत्ययार्थस्य कारकत्वानापत्तेः। एतेन क्रियान्वितविभक्त्यर्थान्वयित्वं कारकत्वमित्यपास्तम्, पक्व ओदनः ' इत्यादौ ओदनादेः कर्मकत्वानापत्तेः।

यदपि क्रियाजनकत्वं कारकत्वमिति, तन्न पूर्वोदाहरणे पुत्रस्य कारकत्वानापत्तेः। तं विना प्रश्नक्रियाऽनिष्पत्तेस्तस्यापि जनकत्वमिति चेत्, तथापि संप्रदानेऽव्याप्तिः, अविद्यमानसंप्रदानस्यापि दानस्य जायमानत्वेन तस्य नियतपूर्ववृत्तित्वाभावात्। 'जायते, करोति' इत्यादौ कर्तृकर्मणोरव्याप्तेश्च।

न च यागस्य पूर्ववृत्तित्वाभावेऽपि अपूर्वद्वारा जनकत्ववत् संप्रदानादिज्ञानस्य पूर्ववृत्तित्वेन तद्द्वारा तस्यापि जनकत्वं सूपपादमिति वाच्यम्, क्रियानिष्ठशाब्दविषयतानिरूपकविषयताश्रयत्वरूपक्रिया-न्वयित्वापेक्षया अन्यथासिद्धनियत-पूर्ववर्तित्वघटितक्रियाजनकत्वस्य गुरुत्वात्।

पाणिनिविरचितकारक इति सूत्रोपरि वदन्ति भाष्यकाराः - ''किमिदं 'कारके'इति''अर्थात् सूत्रे सप्तमीनिर्देशान्नेयं संज्ञा, संज्ञायाः भाव्यमानत्वात् प्रथमानिर्देशस्यैव सर्वत्र सत्वात्। यथा अदेङ् गुणः, वृद्धिरादैच् इत्यादिसंज्ञाविधायकसूत्रेषु संज्ञाबोधकपदस्य प्रथामानिर्दिष्टत्वात्। तदुच्यते भाष्यकारेण - कारक इति संज्ञानिर्देशः। अत्र हि सुपां सुपो भवतीति प्रथमायाः स्थाने सप्तमी कृता। व्याकरणे लघ्वर्थं हि संज्ञाकरणमिति सिद्धान्तसत्वेऽपि ''कारक'' इति महती संज्ञा किमर्थं क्रियते, तदुक्तं भाष्ये - कारक इति महती संज्ञा क्रियते। संज्ञा नाम यतो न लघीयः। कुत एतत् ? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्-अन्वर्थसंज्ञा यथा विज्ञायेत- करोतीति कारकमिति। एतस्य विस्फोरणं कैयटेन कृतं यत् साध्यत्वेन क्रियैव शब्दात्प्रतीयत इति क्रियाया निर्वर्तकस्य कारकसंज्ञाऽपादानादिसंज्ञा च प्रवर्तते। तस्मात् क्रियाजनकत्वं कारकत्वमेवं लक्षणमायाति।

ननु क्रियाजनकस्यैव कारकत्वे पटं करोति, घटं स्मरति, इत्यादौ पटे क्रियाजनकत्वाभावात्, घटे च स्मरणजनकत्वासम्भवादुक्तवाक्यस्थघटपटयोः कारकत्वं न स्यादिति चेन्न, समवायसम्बन्धेन पटकार्यं प्रति तादाम्येन तन्तुः कारणमिति प्रसिद्धस्य कार्यकारणभावस्य सत्वेन तन्तुनिष्ठजनकत्वस्य पट आरोपेण, एवञ्च द्वितीयस्थले समवायेन घटविषयकस्मरणं प्रति समवायेन घटविषयकं ज्ञानं कारणमिति आत्मनिष्ठप्रत्यासत्या सम्बन्धिज्ञाननिष्ठजनक-त्वस्य घट आरोपेण दोषाभावात्।

अथवा वैयाकरणनिकाये अस्त्यपरोऽप्युपायः तद्यथा वैयाकरणैः बौद्धार्थस्यापि पदशक्यत्वेन शाब्दबोधविषयमङ्गीक्रियते। तद्बोधतात्पर्येणैव च शब्दानामुच्चारणं भवति। एवञ्च 'कर्मणि द्वितीया 'इत्यादि सूत्राणां क्रियाजनककर्मादिरूपार्थविषयक-बोधतात्पर्येणोच्चरितत्वात् घटादिपदाद् द्वितीया भवति। सूत्राणां प्रवृत्तिविषयताऽपि तत्तद्बौद्धार्थरूपरूपिते बाह्यार्थे। एवञ्च पटं करोति, घटं स्मरतीत्यादौ बाह्यर्थाभावेऽपि तत्तद्बौद्धार्थस्य क्रियाजनकत्वान्न कारकत्वक्षतिः। एवं च बौद्धार्थस्य क्रियाजनकत्वे सिद्धे बाह्यार्थे जनकत्वव्यवहारः आरोपेणैवोपपादनीयः। तस्मादुक्तं शेखरे- घटं स्मरतीत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोध्यम्। तस्मात् क्रियाजनकत्वं कारकत्वमिति पक्षे न कश्चन दोषः।

## पादटिप्पणी

1. लघुशब्देन्दुशेखरः कारकप्रकरणम्
2. अष्टाध्यायी 1.4.54
3. वाक्यपदीयम्
4. वैयाकरणभूषणसारः
5. वैयाकरणभूषणसारधात्वर्थनिर्णयः पृष्ठसंख्या 122
6. वैयाकरणसिद्धान्तमञ्जूषायां सुबर्थविचारः
7. अष्टाध्यायी 2.3.2

*सहायकप्राध्यापकः,*
*शासकीयसंस्कृतमहाविद्यालयः,*
*देवेन्द्रनगरम् पन्ना मध्यप्रदेशः*

ISSN : 2581-6446

# अनुबन्धचतुष्टयम्

गिरीशचन्द्रः

सर्वप्रथमम् - को नाम अनुबन्धत्वम् ?

अनुबन्धं तु 'प्रवृत्तिप्रयोजकज्ञानविषयत्वम्' अनुबन्धत्वं भवति इति। कस्यापि जनस्य ग्रन्थे प्रवृत्तिः स्यात् एतदर्थं अनुबन्धचतुष्टयं भवति।

तत्र कस्यापि शास्त्रस्य ग्रन्थस्य निबन्धस्य किं बहुना पत्रस्य च कश्चन निरूपणीयो विषयो भवति। अत एव काचन मर्यादा निर्धारिता विद्यते।

**'विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनम्।**

**अनुबन्धं विना ग्रन्थे मङ्गलं नैव शस्यते'**।। इति।।

यथा लोके केचन नियमा निर्धारिता वर्तन्ते येषां परिपालनेन समाजस्य व्यक्तेः सर्वेषां वस्तूनाञ्च संरक्षणं परिवर्धनं भवति। अतो रघुवंशे -

**'न व्यतीयुः प्रजास्तस्य नियन्तुर्नेमिवृत्तयः'।**

इति प्रोक्तम्। तथैव ग्रन्थनिबंधपत्रादिपरिलेखनावसरे नु-बन्धचतुष्टयस्य परिपालनमन्तरा श्रोता तत्र सोत्साहो न प्रवर्तते। अत एव सुक्तिरियं सदा समाद्रियते -

**'ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते।**

**गन्थादौ तेन व्यक्तः सम्बन्धः सप्रयोजनः'**।। इति।।

प्रयोजनमनुदिश्य मन्दोपि न प्रवर्तते। इति उक्तिना अयं स्पष्टं यत् निष्फलं कार्ये कोपि न प्रवर्तते। इति राद्धानुसारं श्रीमान् केशव मिश्रः अपि अनुबन्ध चतुष्टयं श्लोकमाध्यमेन कथयति तर्कभाषायाम्। विषयप्रयोजनाधिकारिसम्बन्धरूपानुबन्धचतुष्टय निर्देशेन पद्य माध्यमेन ग्रन्थप्रयोजनमाह। यथा श्लोकः अस्ति।

**'बालोपि यो न्यायनये प्रवेशमल्पेन वाञ्छत्यलसः श्रुतेन।**

**संक्षिप्तयुक्त्यन्वित तर्कभाषा प्रकाश्यते तत्र कृते मयैषा''**।।

श्लोकस्य अर्थः अस्ति यत्-आलस्ययुतो बालोपि योल्पेन श्रुतेन न्यायसिद्धान्ते प्रवेशं वाञ्छति तस्य कृते। संक्षिप्ताभिः युक्तिभिः अन्विता इयं तर्कभाषा मया विरच्यते।

**अनुबन्धचतुष्टयम्**

1. विषयः-अत्र प्रमाण-प्रमेयादि-षोडशपदार्थाः न्यायशास्त्रप्रसिद्धाः विषयरूपेण सन्ति। अर्थात् न्यायशास्त्रप्रतिपाद्याः प्रमाण प्रमेयादि षोडश पदार्थाः अस्य ग्रन्थस्य विषयाः सन्ति।

2. प्रयोजनम्-न्यायशास्त्र सिद्धान्तानां सारल्येन बोधप्राप्तिः ग्रन्थनिर्माणप्रयोजनं वर्तते, अर्थात् न्यायशास्त्रसिद्धान्तानां अत्यन्त सारल्येन ज्ञानं भवति तत् प्रयोजनम्।

3. अधिकारी-न्यायशास्त्र सिद्धान्त जिज्ञासु अधिकारी वर्तते अर्थात् न्याय शास्त्रे प्रवेशं इच्छन्ति ये जनाः ते अधिकारिणः सन्ति।

4. संबन्धः-ग्रन्थस्य तस्य विषयेण सह प्रतिपाद्य -प्रतिपादक-भावसम्बन्धः अत्र सम्बन्धोस्ति।

व्याकरण शास्त्रे अनुबन्धस्य अन्यदेव अर्थः स्वीक्रियते। यथा - परिभाषेन्दुशेखरे श्रीमद् नागेशेन एका परिभाषा लिखिता यत् अनेकान्ता अनुबन्धा इति अर्थात् अनवयवाः भवन्ति अनुबन्धाः। वैयाकरणाः मन्यन्ते यत् अनुबन्ध शब्देन इत् संज्ञा योग्यत्वम् अनुबन्धत्वम् इति।

**पादटिप्पणी**

1. रघुवंशः प्रथमसर्गः, श्लोकः-16 2. वेदान्तसारः
3. तर्कभाषा मङ्गलाचरणम्

*व्याकरणछात्रः*

*केन्द्रीयसंस्कृतविश्वविद्यालयः, वेदव्यासपरिसरः बलाहरः*

